भारतवीररत्नमालायास्तृतीयंरत्नम्

# चरमक्षत्रियदिल्लीश्वर-

## सार्वभौम-

# श्रीपृथ्वीराजचव्हाणचरितम्



लेखकः

हसूरकरोपाह्वः श्रीपादशास्त्री.

भारतवीररत्नमालायास्तृतीयंरत्नम्

# चरमक्षात्रियदिल्लीश्वर-

## सार्वभौम-

# श्रीपृथ्वीराजचव्हाणचरितम्


लेखकः

हसूरकरोपाव्हः श्रीपादशास्त्री

न्यायतीर्थः, वेदान्ततीर्थः, मीमांसातीर्थः, सांख्यसागरः,

होलकरसंस्कृतमहाविद्यालयस्य

प्रधानाध्यक्षश्च.





एतच्च

इंदूरनगरे

श्रीगजानन प्रिंटिंग वर्क्स, नाम्नि मुद्रणालये तदध्यक्षेण

प्रकाशकस्य कृते मुद्रापितम्.





मूल्यं सार्धोरूप्यकः (१॥) प्रेषणव्ययः पृथक्.

बान्धवाः? इदं न कस्याप्येकस्य मानवस्य चरितं किन्तु सर्वोऽपि संसार एवात्र संक्षेपेण लिखित इति यूयं पठित्वा वदेत ! यध्यस्य चारितस्य पठनेन जीवत्सु बलाढ्येषु क्षत्रियकुलेषु कथं महंमदीया अत्र समागत्य भारतवर्षमजयन् अस्मांश्चेदृशीं दुरवस्थां प्रापयन्निति सम्यगांजस्येन पाठका अवगच्छेयुः, तदाऽहमात्मानं कृतार्थं मन्ये. अन्ते च सर्वानपि वो देशबान्धवानत्र दृष्टिक्षेपाय सविनयं विज्ञप्य विरमामि.

( विदुषां वशंवदः )

**श्रीपादशास्त्री.**

# मुख्यविषयानुक्रमः—


१ गुच्छः ... ... ... १—११

२ गुच्छः ... ... ... १२—२३

३ गुच्छः ... ... ... २४—३४

४ गुच्छः ... ... ... ३५—४७

५ गुच्छः ... ... ... ४८—६४

६ गुच्छः ... ... ... ६५—७६

७ गुच्छः ... ... ... ७७—८८

८ गुच्छः ... ... ... ८९—१०४

९ गुच्छः ... ... ... १०५—११९

१० गुच्छः ... ... ... १२०—१३९

११ गुच्छः ... ... ... १४०—१५७

१२ गुच्छः ... ... ... १५८—१८६

सूर्यवंशे राजा रामचन्द्रः प्रादुर्बभूव. अस्तु. तस्येक्ष्वाकोर्भगिनी 'इला' चन्द्रपुत्राय बुधराजाय प्रदत्ता. ततएव च प्रसिद्धश्चन्द्रवंशः प्रससार. तस्य बुधस्य पुत्रो ययातिर्नाम बलाढ्यो नरपतिर्बभूव. तस्य 'ऊरु' 'पुरु' 'यदु' नामानस्त्रयः पुत्रा आसन्. तत्र पुरोर्वंशे समुत्पन्नो हस्ती नाम नरेशः सुप्रसिद्धं हास्तिनापुरं वासयामास. हस्तिराजमारभ्य द्वाविंशः पुरुषः प्रसिद्धोऽजातशत्रु-र्युधिष्ठिरोऽभूत्. स च सुप्रसिद्धेऽनेकनरवीरसमलंकृते कुरुक्षेत्रसंग्रामे विजयं लब्ध्वा प्रसिद्धमिंद्रप्रस्थदुर्गं व्यरचयत्. एवं यदोर्वंशेऽपि भगवान् कृष्णस्तथा बलरामश्च समभवताम्. तौ च स्वीयां राजधानीं गुर्जरदेशे वर्तमानं द्वारकाक्षेत्रमकुरुताम्. साम्प्रतम् जैसल-मीराधीपास्तथा कच्छप्रांताधिपा आत्मानं कृष्णवंशजान् भावयन्ति. जयपूरजोधपूरोदयपुराधिपाश्च सूर्यवंशसंभवानात्मानं निवेदयन्ति. अस्तु.

सुप्रसिद्धे युधिष्ठिरवंशे लब्धजन्मानस्त्रिंशा नृपाः स्वपैतृकं सिंहा-सनं प्राप्य धर्मेणावर्तन्त. एतेषु चरमः क्षेमराजः स्वकर्तव्यपरांमुखो विहारी स्त्रैणः सकलदोषभाजनं बभूव. राजानं च कुमार्गगामिनं विलोक्य तत्सेवका अपि तथैवावर्तन्त. तेन सर्वेऽपि प्रजाजना असन्तुष्टा राजशासनमत्यक्रामन्. प्रजासु राजशासनमतिक्राम्यन्तीषु सतीषु प्रतिदिनं नानाविधा आपदः समापतन्.

ईदृशीमव्यवस्थां वीक्ष्य तस्य क्षेमराजस्य प्रधानामात्यो विसर्वो नाम स्वामिनं हत्वा हास्तिनापुराधिपत्यमात्मसादकरोत्. यद्यपि स्वामिवधेन लब्धराज्यः सोऽमात्यः प्रजानां नातिप्रियोऽभूत्तथापि कुमार्गगामिनः

क्षेमराजस्य दुराचारेभ्यो मोचितास्तास्तस्मै नात्यद्रुह्यन्. स च तद्वंशजाश्च न्यायेन वर्तमाना बहुकालपर्यंतमिंद्रप्रस्थराज्यमपालयन्. तस्य च वंशजो यदा राज्यमकरोद्राजपालोनाम, तदा परमविख्यातस्तुवरवंशीयो विक्रमादित्योनाम राजा प्रतापप्रबलो बभूव. स च शीघ्रमेव तस्य राजपालस्य घातकं सुखवंतनामानमिंद्रप्रस्थाधिपं हत्वा कृत्स्नमेव तद्राज्यं स्वायत्तीचकार. जित्वा चेंद्रप्रस्थराज्यं न्यायेन तत् परिपाल्य दिवंगतवति विक्रमादित्ये क्रमेण तदन्यूनाः पराक्रमशालिनः पुत्रपौत्रादय इन्द्रप्रस्थसिंहासनमधिवसानाः सर्व एव प्रजाः सम्यगपालयन्.

वाचकाः ! यद्यपि अयं च क्षत्रियवंशस्येतिहासः परमसंक्षिप्तस्तथाप्येतदन्यस्य समग्रस्य क्षत्रियवंशेतिहासस्याभावादत्रायमेव निरूपितः. दुर्दैवं भारतवासिनां यत्तेषां परमभाग्यशालिनां पूर्वजानां चित्ताह्लादकर इतिहासः सम्यक् नोपलभ्यते ! सज्जनाः ! सकलजगतीतलवासिनो जना यदाऽज्ञानगाढान्धकारमग्ना आसंस्तदानीमस्यामेव भारतभुवि ब्रह्मर्षयो राजर्षयश्च व्यराजन्. परन्तु तेषामितिवृत्तबोधकानां ग्रंथानां नाशाद्वाऽभावाद्वा साम्प्रतम् केवलं वयमीदृशीं हीनावस्थां प्राप्ताः! क सन्ति पुण्यश्लोकानां नः सम्राजां लोकोत्तरकर्तव्यप्रतिपादका इतिहासग्रंथाः ? साम्प्रतं च नष्टबुद्धयो वयं दीर्घपरिश्रमैः परकीयैः शोधकैः प्राकट्यं नीतेभ्य एवास्मत्पूर्वजेतिहासेभ्यः स्वल्पं ज्ञानं लभामहे. अस्तु. प्रकृतमनुसरामः.

( २ )

उपरिकथितरीत्या विक्रमादित्यवंशजेषु हस्तिनापुरराज्यम् पालयत्सु सत्सु चरमोऽनंगपालनामा राजा बभूव. स च सकलगुणसंपन्नो धार्मिकः सदाचाररतो न्यायेन प्रजाः पालयन्नधर्मभीरुरासीत्. तस्मिन् राजनि पितृवत्प्रेम्णा प्रजाः पालयति सति सर्वेऽपि वर्णाः स्वस्वविहितकर्मकारिणः सुखस्य परां काष्ठां प्रापुः. परकीया यवनादयोऽस्या भारतभुवः संपत्तिं वीक्ष्य नितरां व्यसयन्त. स्थाने स्थाने च कनकखनीः हीरकनिधीन् सूक्ष्माणि वस्त्राणि सर्वनित्यव्यवहारवस्तुसौलभ्यं च पश्यन्त इमां जेतुमैच्छन्. सुन्दररमणीरत्नपरिपूर्णान्तःपुरशालिनोऽपि तस्यानंगपालस्य सुतमुखकमलदर्शनसुखं दुर्लभमासीत्. सोऽपि सततमीश्वरभक्तिमेव संसारार्णवतरणे नौकां मन्यमानः सर्वदा परमात्मानमभजत. वाचकाः ! अयं पुण्यश्लोकोऽनंगपालएवास्मच्चरित्रनायकस्य पृथ्वीराजस्य मातामहः. यद्यप्यस्य राज्ञो न तनय आसीत्तथापि सरस्वतीलक्ष्म्याविव द्वे कन्यके आस्ताम्. तयोर्मध्ये ज्येष्ठा कमलादेवी सुविख्याताया जमीराधीशाय सोमेश्वरनाम्ने भूपालाय प्रदत्ता. अन्या च कन्नोजाधिपतये विजयपालाय प्रदत्ताऽसीत्. तत्र परमपतिव्रता कमलादेवी खल्वस्मच्चरित्रनायकस्य माता. तथैव कनीयस्या अपि पुत्रो जयचन्द्रो नाम.

वाचकाः ! पुण्यश्लोकस्य पृथ्वीराजस्यायं मातृवंशो वर्णितः. पितृवंशश्चेत्थम् ––

सुप्रसिद्धचव्हाणवंशजो वीसलदेवो नाम महाविक्रमशाली राजाऽजमीरक्षेत्रे राज्यमकरोत्. इदमेवाजमीरनगरं द्रोणगिरिशब्देनाऽपि निगद्यते. अस्तु. अस्मिन् राजनि स्वीयं राज्यं न्यायेन शासति सति बुभुक्षिता गृध्रा इवेमे महंमदीया इमां भारतभुवं जेतुं प्रायतन्त. तान्निराकर्तुमयं वीसलदेवः सर्वान् क्षत्रियवंशसंभवान् नृपान् साहाय्यार्थमाव्हयत्. सर्वे च नृपास्तदाह्वानमंगीकृत्य तद्राजधानीमाजग्मुः, केवलं गुर्जराधिपो भीमदेवो नाजगाम. तदानागमनं च देशद्रोहकरं मन्वानो वीसलदेवस्तं भीमदेवमाक्रम्य रणांगणे जिगाय. यत्र च तेन समं वीसलदेवस्य युद्धं बभूव तस्मिन् स्थले स्वयशःस्मरणार्थं राजा वीसलदेवः स्वनामांकितं महन्नगरं 'वीसलनगरं' वासयामास. वाचकाः! अस्य वीसलदेवस्य संबंधिनीमाख्यायिकां चन्दनामा बन्दिवर्यः स्वविरचिते रासाग्रंथे न्यरूपयत्. सा चेत्थम्—

अयं वीसलदेव एकां नागकन्यां पर्यणयत्. तया नागकन्यया प्रेम्णा वशीकृतः स वीसलदेवस्तस्यामेव परमनुरक्तोऽभूत्. तद्वीक्ष्यान्याः सपत्न्यः परमद्रुह्यन्. सा च नागकन्या स्वविलासमन्दिरं जलपरिपूर्णतडागमध्यवर्ति निर्माय तत्र निभृतमागमनकारणमेकं मणिं राज्ञे ददौ. सोऽपि तं गृहीत्वा तन्मन्दिरं प्रतिदिनमगच्छत्. सपत्न्यश्च तत्र गन्तुमशक्नुवन्त्यः कथं राजा गच्छतीति विचारयामासुः. अथ मणिं कारणत्वेन विज्ञाय सन्तुष्टास्तन्मणिं यत्नेन गोपयामासुः. राजा च मणिं विना तत्र गन्तुमशक्नुवंस्तद्विरहाकुल इतस्ततो मत्तवत् परिबभ्राम. सविलापमितस्ततो विचरता तेन मार्गे काचन ऋषिकन्यका

स्पृष्टा. सा तु क्रुद्धा तस्मिन्नेव क्षणे 'त्वं राक्षसो भव' इति तं शशाप. अचिरादेव राक्षसस्वरूपमापन्नः स वीसलदेवः सर्वांस्तन्नगरवासिनो जनान् भक्षयामास. तद्भीत्याचावशिष्टा नागरिका अन्यान् देशान् जग्मुः. तेन तन्नगरं श्मशानमिव निर्मनुष्यमभवत्.

अथ तस्य वीसलदेवस्य पुत्रः सारंगदेवः पितुरनन्तरं स्वीयं राज्यं पालयामास. तस्य च पुत्रोऽनहदेवो राज्यं शासदजमीरनगरे महान्तमनहसागरनामकं तडागं व्यरचयत्. अनहदेवस्य तनयो जयपालस्तस्यानन्ददेवस्तस्य प्रतापी पुत्रः सोमेश्वरः क्रमेण द्रोणगिरिराज्यमकरोत्. वाचकाः ! अयमेव प्रतापसूर्यस्य पृथ्वीराजस्य पिता. अस्मिन् राजनि स्वराज्यं शासति सति कश्चन ब्राम्हणः स्वपत्नीत्रासेनोद्विग्नस्तं वीसलदेवं शरणं गत्वा 'मां भक्षय' इति प्रार्थयामास. स तु वीसलदेवरूपी राक्षसः साश्चर्यं 'किमितीत्थं निर्विण्णोऽसीति' तं ब्राम्हणमपृच्छत्. स च दीनो विप्रः स्वीयां परिस्थितिं तस्मै निवेद्य मम पत्नी मां परं त्रासयतीति कथयामास. राक्षसश्च तस्य विप्रस्य भाषणेन संजातकृपस्तस्मै विपुलं द्रव्यं वितीर्य- 'विप्रश्रेष्ठ। अहं च राक्षसयोनिं प्राप्यात्यन्तमुद्विग्नोऽस्मि. तत्त्वमितो गत्वाऽजमीराधिपं सोमेश्वरं वद! राजन्? वीसलदेवराक्षसस्त्वां मन्मुखेन विज्ञापयति-'मां हत्वा भक्ष' इति. यद्यप्यास्मिन् रूपे मां हत्वा तेन राज्ञा भक्षणमशक्यं तथाप्यहं सूकररूपं धृत्वा परितोऽरण्ये विचरन् मृगयार्थं समागतेन तेन राज्ञा हंतव्यः. योहि मन्मांसं भक्षयेत्सोऽवश्यमेवालौकिकपराक्रमशालिनः सद्गुणाढ्यान् पुत्राँल्लभेत. ततोऽवश्यमेव

त्वं मां हत्वाऽस्माद्दुःखान्मोचयेति संदेशप्रापणाय प्रार्थयामास. स च ब्राह्मणस्तद्द्रव्यं गृहीत्वा सन्तुष्टः शीघ्रमेव सोमेश्वराय तं संदेशमकथयत्. ततश्च स्वसामन्तमंडलेन समं मृगयार्थं निर्गत्य स सोमेश्वरः क्षणात्तं सूकररूपधारिणं वीसलराक्षसं हत्वा तन्मांसं सर्वैः सममभक्षयत्. तस्मिन् भोजने कविराजस्य चन्दवन्दिनः पिताप्यासीत्. अचिरादेव श्रीद्रोणगिरिनाथः सोमेश्वरः सम्राजं पृथ्वीराजं प्रासूत. लोकोत्तरवर्णनानिपुणं चन्दबन्दिनमपि तदीयः पिताऽपि. अन्ये च सामन्ता अपि स्वस्वयोग्यतानुरूपान् पराक्रमभासुरान् पुत्रानलभन्त. अस्मच्चरित्रनायकः पृथ्वीराजः भूतब्रह्मनेत्रब्रह्म–(१२१५) परिमिते विक्रमसंवत्सरेऽभूत्.

[ ३ ]

अथ राजाऽनंगपालः स्वयमपुत्रोऽपि स्वकन्ययोः पुत्रौ पृथ्वीराजजयचन्दौ वीक्ष्य परममोदत. सत्वात्मानं प्रवयसं समीक्ष्यात्मसाधनं चिकीर्षुः स्वीयं राज्यं ज्येष्ठकन्यायाः पुत्राय पृथ्वीराजाय समर्पयितुं मनश्चक्रे. अलिखच्च स्वमनोरथं पत्रद्वारा पृथ्वीराजाय. तच्च पत्रमित्थम् ——

स्वस्ति श्रीपृथिवीनृपाय सुधिये मातामहः सादरं ।
साश्लेषं परिगृह्य वक्ति अधुना मां विद्धि मोक्षार्थिनम् ॥
तत्तुभ्यं सकलं समर्पितमिदं राज्यं सुकोशान्वितम् ।
प्रेम्णा पालय वर्धयस्व सुतरां न्यायेन वर्तस्व च ॥ १ ॥

वाचकाः! किमयं लेखो नास्ति स्वकर्तव्यताबोधकः? अस्तु.

पृथ्वीराजोऽपि मातामहस्येन्द्रप्रस्थाधीश्वरस्यानंगपालस्याज्ञां शिरसाऽङ्गीकुर्वाणः सर्वं हस्तिनापुरराज्यं स्वीचकार. राजाऽनंगपालोऽपि योग्यपुरुषे निहितराज्यभारतया निश्चिन्तो बदरिकाश्रमं तपस्तप्तुं प्रययौ. स्वपितामहेन कृत्स्नं राज्यं पृथ्वीराजायैव समर्पितमवेक्ष्य नितान्तं क्रुद्धः कनोजाधिपतिरनंगपालस्य कनिष्ठकन्यापुत्रो जयचंदः पृथ्वीराजाय परमद्रुह्यत्. प्रकाशमब्रवीच्च—मातामहेनानंगपालेन कृत्स्नं राज्यं पृथ्वीराजायैव समर्पितमेतन्न सम्यक् कृतं. अहमपि ह्यनंगपालस्य दौहित्रः ! यथाऽनंगपालस्य पृथ्वीराजः प्रियस्तथाऽहमपि. शरीरसंबंधतश्च समानावेवावाम्. तस्मादनंगपालस्य राज्येऽर्धो मदीयोंऽशोऽस्त्येवेति.

वाचकाः ! यद्यपि राज्ञाऽनंगपालेन यत्कृतं तत्साध्वेव शास्त्रविहितं च. यतः सर्वाण्यपि शास्त्राणि पुत्रेषु ज्येष्ठपुत्रस्य राज्यभोगित्वं वदन्ति. तदभावे न्यायत एव ज्येष्ठकन्यायाश्च तनयस्तदंशभागीति वदन्ति. तथापि राजनीतौ न्याय्यान्याय्यविचारस्तावदेव जायते यावदुभावपि पक्षौ समबलौ स्याताम्. यदा त्वेकः पक्षोऽधिकबलोऽन्यश्च हीनबलस्तदा सर्वं न्याय्यान्याय्यविचारं विहाय सबलो हीनबलं नाशयत्येव. सज्जनाः? किमर्थमित्थं दूरान्वेषणा. ये खलु राजान इह जगति नानाविधान्नियमान्विधाय जनान् पालयन्ति तेऽपि परराज्यापहारार्थं रात्रिंदिवं प्रयतन्ते. यदि कश्चन चौरो रात्रौ निभृतं कस्यापि गृहं प्रविश्य तद्द्रव्यमपहरति ज्ञायते च स तत्कर्मकारी राजपुरुषैस्तदा स कारागारे स्थाप्यते. परन्त्विमे राजानः सुव्यवस्थितां सेनां गृहीत्वा यदा सर्वजनानां समक्षं परराज्यान्याक्रम्य तत्स्थ जनानां

वित्तं स्वातंत्र्यमपहरन्ति तदा नैकोऽपि विद्वान् नैकमपि शास्त्रमेतां-श्चौरत्वेन व्यपदिशति. प्रत्युत प्रतापशालित्वेन तान् स्तुवन्ति. महाभागाः! इदं सर्वं राजनीतिस्वरूपं क्षणभंगुरं वारांगनाप्रेमसमं वीक्ष्य निर्विण्णाः सज्जना विशेषतो राजनीतौ न्याय्यान्याय्यविचारचर्चाया-मुदासते. अस्तु. प्रकृतमनुसरामः. स च जयचन्दो बलाढ्यो रात्रिं-दिवं पृथ्वीराजनाशाय प्रयतमानः स्वसेनादिकं वर्धयामास.

अथ नागोरनगरस्य समीपे 'खट्टूपूर' नामकः कश्चन ग्रामो वर्तते. तत्रातिप्राचीनोऽपारधनपरिपूर्णो गुप्तः कोशो वर्तत इति किंवदन्तीं पृथ्वीराजः शुश्राव. श्रुत्वा च तं कोशमात्मसाच्चिकीर्षुः सुकुशलैर्मन्त्रशास्त्रकोविदैस्तं कोशमन्वेषयत्. तेऽपि निपुणमन्विष्य प्रत्यागत्य 'अस्ति तत्र महान् कोशः' इति कथयामासुः. ततः पृथ्वीराजो बुद्धिमता चतुरेण कयमाषनाम्ना प्रधानामात्येन समं तत्स्थानं जगाम. अपश्यच्च तस्य कोशस्य प्रवेशद्वारे चतुरेण कोशस्य स्थापयित्रा स्थापितां मूर्तिं. अपठच्च तस्याः शिरःप्रदेशे लिखितमिदं वाक्यं.—

"शिरश्छित्वा धनं ग्राह्यं। अन्यथा दुर्लभं धनम्" चिन्तयामास च मनसि—यदि मदीयं शिरश्छित्वा धनं लभ्येत, तदा तस्य कोवोपयोगइति. एवंचिन्तापरे पृथ्वीराजे तच्चिन्ताकारणं ज्ञात्वा चतुरः कयमाषोनामामात्यः सस्मितमब्रवीत्—'स्वामिन्! नायमस्य वाक्यस्यार्थः किंतु यावदस्या मूर्तेर्मस्तकं स्थिरमास्ति तावत्संपल्लाभोदुर्लभः परंतु यदा कश्चन साहसिकोऽस्या मूर्तेः शिरश्छिन्द्यात्तदा स तस्मिन्नेव क्षणे कृत्स्नमपि धनं लभेतेति. इदं च तस्य भाषणं निशम्य संतुष्टः पृथ्वी-

राजस्तस्मिन्नेव क्षणे स्वहस्तवर्तिना खड्गेन तस्या मूर्तेः शिरश्चिच्छेद. द्विधाभूते तस्या मूर्तेः शिरसि पश्चाद्वर्तमानं कपाटयुगलं स्वयमुद्घाटितमभूत्. तेन च प्रविश्य पृथ्वीराजो यदा सर्वतो ददर्श तदा सर्वत्र सुवर्णमुद्राराशीनेवापश्यत्. ततश्च तं कुशाग्रमतिं प्रधानमभिनंद्य सैनिकैस्तं सर्वं कोशं स्वराजधानीमानयत्. गणितासु तासु मुद्रासु सप्ततिलक्षसंख्या तासामजायत.

[ ४ ]

तमेनं महाकोशं लब्ध्वा पृथ्वीराजः स्वसेनां तथा राज्यव्यवस्थां सम्यगकरोत्. तामिमां वार्तां निशम्य कनोजाधिपतिस्तु परं चिन्तातुरो बभूव. तेन द्रव्येण पृथ्वीराजस्य प्रसृतां कीर्तिं निशम्य खिन्नः स्वमित्रेण पट्टणाधिपेन समं निभृतं मंत्रयांचक्रे. तौ च तस्य पृथ्वीराजस्य नाशार्थं मंत्रयित्वा स्वस्य साहाय्यार्थं गिझनीदेशाधिपं महंमदीयधर्मानुयायिनं घोरीत्युपाह्वं शहाबुद्दीननामानं म्लेच्छं समाव्हयताम्. सोऽपि च केनापि निमित्तेनेमां सुसम्पन्नां भारतभुवं जेतुकामो महताऽनंदेन साहाय्यप्रदानं स्वीचकार.

वाचकाः! इदं खलु भारतवर्षस्य भारतवासिनां च परम् दौर्भाग्यम्. यत् परस्परं द्विषन्तस्ते कनोजाधिपतिसमाः क्षत्रियश्रेष्ठाः स्वकीयस्यैव देशबांधवस्य चक्रवर्तिनो नाशाय परकीयं विधर्माणमाजुहुवुः. कृत्स्नेऽपि भारतवर्षेतिहासे प्रायः सर्वत्रेदृश्येव रीतिर्दृश्यते. महंमदीयाश्च प्रथमतः कस्यापि नाशाय केनाप्येकेन पक्षेणाहूतास्तं निर्मूलीकृत्य स्वस्य साहाय्यस्य याचितारं स्वसुहृदमपि निहत्यात्रैव

ते राजानोऽभवन्. अधुनाऽपि अयं सर्वानर्थकारी परस्परद्वेषो न शाम्यति. अस्तु. प्रकृतमनुसरामः.

अथ युद्धोद्यतौ तौ कनोजाधिपतिं पट्टणाधिपतिं च प्रेक्ष्य पृथ्वीराजश्चितोडनराधीशं स्वभगिनीपतिं समरसिंहं स्वसाहाय्यार्थं प्रार्थयत. सोऽपि स्वश्यालं संकटपतितं वीक्ष्य सहसा महता सैन्येन समं द्रोणगिरिं समाजगाम. ततोऽचिरादेव प्रवृत्ते भयंकरे समरे पृथ्वीराजः समरसिंहस्य साहाय्येन कनोजाधिपं पट्टणेश्वरं च पराजिग्ये. तयोश्च सैनिकाः कांदिशीका वनाद्वनान्तरं भ्रमन्तो महता दुःखेन स्वस्वनिवासमयुः. स तु कपटी शहाबुद्दीनः पृथ्वीराजेन जीवग्राहं गृहीतो मासद्वयं कारागारे स्थापितो महता प्रयत्नेन ' न पुनरेवं करिष्यामि ' इतिशपथीकृत्य कथमप्यात्मानं मोचयामास. अदाच्चोपायनत्वेन पृथ्वीराजाय 'अष्टसहस्रसंख्याकानुत्तमानश्वान्.' पृथ्वीराजोऽपि बन्दिजनोच्चारितजयजयशब्दः स्वराजधानीं प्रविश्य सर्वाभिः प्रजाभिः सानन्दं सत्कृतः स्वाश्रितेभ्यः परं धनमदात्. स्वसामन्तेभ्यश्च तांस्तान् प्रान्तान्. स्वसाहाय्यकारिणे भागिनीपतये समरसिंहायापि स महान्तं भूविभागं दातुमुद्यतोऽपि निस्पृहेन समरसिंहेन निषिद्धस्तूष्णीं तस्थौ. समरसिंहश्च सत्यमेव समरे सिंहोऽपि प्रकृत्याऽत्यन्तं विरक्त एवासीत्. स तु परमः शिवभक्तः सदैव रुद्राक्षमालास्तथा भस्म चाबिभः. तेन जनास्तं योगीन्द्रमित्येवावदन्. अस्मिन् समये साहाय्यविधानात्तस्मिन् समरसिंहे राजा पृथ्वीपतिरपि परां प्रीतिं चकार. सोऽपि तस्मिन्.

# द्वितीयो गुच्छः ।

१ महंमदीयानां प्रवेशः ।
२ तैः समं क्षत्रियाणां युद्धं जयप्राप्तिश्च ।
३ पुनरपि तेषां युद्धार्थमागमनम् ।
४ संधिः. अजमीरत्यागः. इन्द्रप्रस्थवासः ।

[ १ ]

एवं गिझनीश्वरं शहाबुद्दीनं तथा स्वप्रतिस्पर्धिनौ कनोजपट्टणाधिपौ निर्जित्य प्रभूतं धनं भूविभागं च लब्ध्वा प्रवृद्धयशा ग्रीष्मरविरिव प्रतापेनातप्यत् राजा पृथ्वीपतिः. स नियमेन प्रतिमासं कृष्णपक्षे तारागडदुर्गे सर्वतो दीपमालाः प्रजज्वाल. तेन च तत् तारागडदुर्गमक्षयेण श्रीपृथ्वीराजयशसा मण्डितमिव शत्रूणां दुर्दर्शनमभूत.

अथैकदा प्रज्वालितानामसंख्यदीपावलीनां प्रकाशं वीक्ष्य संतप्तो मक्कास्थो महंमदीयमुख्यो मीराखानः 'किंनिमित्तोऽयं प्रकाशः'

इत्यन्वेषणार्थं स्वशिष्यं रोशनवल्लिमजमीरनगरं प्रेषयामास. सोऽपि क्रमेणाजमीरनगरं प्राप्य सर्वं वृत्तं ज्ञात्वा पृथिवीन्द्रस्य पृथ्वीराजस्य शक्रागम्यमैश्वर्यं प्रत्यक्षीकृत्य स्वदेशं गन्तुमियेष. स तु रोशनवल्लिरैन्द्रजालिकोऽजमीरनगरवासिभ्यः स्वागमनं निवेदयितुकामोऽनहंसागरतडागस्य तीरे गजचर्म परिधाय हस्तेन मणिमालां वहन्नतिष्ठत्. प्रभाते च जलानयनार्थमागता नगरवासिनो यवनाक्रान्तं स्वमार्गमवलोक्योद्विग्नाः सर्वं वृत्तं नगराधिकारिभ्यो न्यवेदयन्.

अत्रान्तरे सुप्रसिद्धो भीमसेन इव वलिष्ठो भगवतीभक्तः चामुंडरायो नाम सामन्तः पृथ्वीराजस्य श्यालस्तडागमध्यवासिनीं भगवतीं पूजयितुं दैनिकक्रमानुसारेण तत्राजगाम. स च तडागमार्गरोधिनं तं यवनं वीक्ष्य क्रुद्धः सकोपं—अरे यवनापसद! अत्र तडागप्रवेशद्वारमवरुध्य किमर्थं तिष्ठसि? इत्यपृच्छत्. सोऽपि रोशनवल्लिरैन्द्रजालिकः सहासं तं महावलं चामुण्डरायं—रे नीच! मूर्तिपूजक! त्वमधमोऽसि इति प्रत्यवोचत्. चामुण्डरायस्तु क्रोधरक्तनयनस्तस्य यवनस्यापभाषितेन संतप्तस्तस्यैन्द्रजालिकस्य शिरश्छेत्तुं स्वखड्गं निष्कोषमकरोत्. स तु यवनस्तस्य चामुण्डरायस्य तेजस्विनीं भयंकरां मुद्रामवलोक्य भीतः सहसा तस्मात्स्थलादपससार. चामुण्डरायोऽपि विवेकवशीकृतमनाः किं क्षुद्रस्य कीटसमस्यैकस्य यवनस्य हननेन प्रयोजनमिति विचारयन् भगवतीं पूजयितुं ययौ.

ततो द्वितीयदिने स धृष्टो रोशनवल्लिरैन्द्रजालिक आपणे पूर्ववदतिष्ठत्. अपश्यच्च तेनैव मार्गेण गच्छन्तीर्मूर्ध्ना दधिभांडानि वहन्ती-

श्चतुःशतसंख्याका गोपीः. अयाचत च तास्वन्यतमां गोपीं दधि. तया प्रदत्तं दधि मधुरं वाऽऽम्लं वेति ज्ञातुं कनिष्ठिकया लिलेह. आम्लं तदनभिमतमिति वदंस्तत्प्रत्याचख्यौ. गोपी च यवनस्पृष्टं तद्दधि अपवित्रं मन्यमानाऽगृहीत्वाऽग्रे जगाम. स तु यवनस्तेनापमानेन संतप्तः स्वसामर्थ्येन तासां गोपीनां वस्त्राणि अधःपातयामास. ताश्च लज्जाकुलाः स्वलज्जारक्षणार्थं युगपदध उपाविविशुः. ततोऽखिलान्यपि दधिभाण्डानि पतित्वा विदीर्णानि. दधि च मृत्तिकासाद्बभूव. तस्मिन्दिने राजप्रासादे दधिदुर्भिक्षमभूत. नागरिकैश्चैषा वार्ता न्यायालयं नीता राज्ञा श्रुता. प्रजापालनतत्परः पृथ्वीराजस्तस्मिन्नेव क्षणे स्वप्रजानां पीडकं प्रशास्तुं रामरायगुजरधीरपुंडीरनामानौ शूरौ द्वौ सामन्तौ प्रेषयामास. तौ च तत्रागत्य तं रोशनवालिं रज्जुभिर्बध्वा पृथ्वीराजसमीपमानयताम्. राजा च ' ययांऽगुल्याऽनेन यवनेन दधि दूषितं सा च्छेत्तव्या ' इति स्वसेवकानादिशत्. स तु यवन इमां राजाज्ञां निशम्य कोपाकुलः ' राजन्? त्वं ममांगुलिं यदि च्छिनत्सि तदा तवेदं तारागडदुर्गमप्याचिरादेव च्छिन्नं भविष्यति ' इत्युवाच.राज्ञा राजसेवकैश्च तदीयमिदं भाषणमनादृत्य तस्यांगुलिः छिन्नैव.

[ २ ]

अथ स रोशनवालिर्यवनश्छिन्नांगुलिः क्रमेण स्वस्वामिनः सन्निधिं गत्वा सर्वं वृत्तं न्यवेदयत्. प्रार्थयच्च--स्वामिन्! यत्खलु तस्मै पृथ्वीराजाय ' ममांगुलिं छिनत्सि परन्त्वचिरादेव तव तारागडदुर्गं

छिन्नं भविष्यतीति अवदम्, तत्सत्यं करणीयमिति. स तु मीरानाम तत्स्वामी सर्वानपि स्वसाहाय्यकारिण आहूय सर्वं वृत्तं कथयित्वा युद्धार्थमादिशत्. तेऽपि स्वजातीयस्यापमानं वीक्ष्य क्रुद्धाः स्वस्वामिनियोगं शिरसा धारयन्तो योद्धुं समनह्यन्. सोऽपि मीराखान ऐन्द्रजालिकः खिंगनामानमश्वं दिव्यामसिलतां च्छुरिकां च गृहीत्वा सर्वैः समं पृथ्वीराजं जेतुं निरगच्छत्. तस्मिन् समये तस्य मीराखानस्य विवाहार्थं मातुलः ख्वाजापीरोऽमूल्यानि वस्त्राणि गृहीत्वा तत्रैव समाजगाम. तं च समागतं प्रेक्ष्य मीराखानोऽवदत्—मातुल ! वयं सर्वे धर्मयुद्धार्थं भारतवर्षं गच्छामः. तत्र यदि विजेष्यामहे तदा महताऽऽनन्देन विवाहं विधाय युष्माभिरानीतानि वस्तूनि ग्रहिष्यामः. अथ यदि विपरीतं वृत्तं चेदवश्यमेवावशिष्टेन सैन्येन समं यूयं साहाय्यार्थमागच्छतेति. सोऽपि मातुलः सर्वमिदमंगीचकार.

ततश्च कतिपयदिवसैस्ते सर्वेऽपि महंमदीया नौकासु स्थित्वेमां भारतभूमिमागच्छन्. अवतीर्य च समुद्रतीरे कल्पितनिवासः स मीराखानः समं स्वसहायैः—'यदि वयं योद्धृवेषेण गच्छामस्तदा ज्ञातवृत्तान्तः पृथ्वीराजः सावधानो युद्धार्थं साभिनिवेशं चेष्टेत. तद्वयं केनापि मिषेण निभृतं तद्राज्यं प्रविश्य तं विजेष्यामह इति मन्त्रयांचक्रे. अस्मिन्नर्थे तदनुयायिनः सर्वेऽप्यनुकूला अभवन्.

अथ स मीराखानोऽश्वविक्रेता नाम भूत्वा सर्वान् स्वानुयायिनः स्वसेवकान् प्रदर्शयन् क्रमेणाजमीरनगरमाययौ. राज्या-

धिकारिणोऽपि तं सत्यमेवाश्वक्रेतारं मन्यमाना राजधानीं गन्तुं न प्रत्यबध्नन्. अचिरादेव स मीराखानोऽजमीरनगरसमीपे स्वावासं कल्पयामास. पृथ्वीराजश्च 'कोऽपि परदेशस्थो यवनोऽत्युत्तमानश्वान् गृहीत्वाऽत्र समायातस्तान्विक्रेतुमिच्छतीति' किंवदन्तीं निशम्य स्वामात्यं कयमाषमश्वानां निरीक्षणाय तथा क्रयणाय च प्रेषयामास. सोऽपि मीराखानस्य वासस्थानमागत्य सर्वानश्वान् रजतशृंगलानिबद्धान् जलपानार्थं पुरस्थापितरजतभाण्डानत्युत्तमान् वीक्ष्य संतुष्टस्तेषां मूल्यमपृच्छत्. स च मीराखानस्तस्यैकस्याश्वस्य मूल्यं लक्षमुद्रा अवदत्. एतादृशं तेषां महामूल्यत्वं निशम्य विस्मितः स कयंमाषामात्यस्तान् क्रेतुं न शशाक. ततः क्रमेण सर्वानप्यश्वान् पश्यन् खिंगमाम्नोऽश्वराजस्य शालामाजगाम. तं वीक्ष्य स प्रधानश्रेष्ठोऽत्यन्तं संतुष्टस्तस्याऽपि मूल्यं पप्रच्छ, मीराखानश्च कुटिलमतिः पृथ्वीराजस्य धनं हर्तुमनास्तस्य मूल्यं षट्त्रिंशत्कोटिमुद्रा अकथयत्. तन्निशम्याश्चर्यमग्नः सोऽमात्यः प्रत्यागत्य सर्वं वृत्तं पृथ्वीराजाय न्यवेदयत्. पृथ्वीराजोऽपि तमश्वं समीक्ष्यात्यन्तं सन्तुष्टः क्रयणार्थं निराचिनोत्. कृत्स्नं कोशागारस्थं द्रव्यं वितीर्य तस्मिन्नेव क्षणे सोऽश्वराजो महतोत्सवेन मन्दुरां नीत्वा निबद्धः महान्तं हेषारवं चक्रे पादैश्चाताडयद् भूमिं. तदानीमेव तस्य हेषारवं श्रुत्वा श्रीपृथ्वीराजस्य वाजिशालास्थाः षट्त्रिंशत्सहस्रसंख्याका अश्वाः सहसा प्राणानमुंचन्. तारागडदुर्गमपि भूकम्पेन द्विधा बभूव. तान्येतानि दुश्चिन्हानि वीक्ष्य सर्वेऽपि स्वामिनिष्ठा नागरिकाः प्रजाजना अत्यन्तं बिभ्युः. स्वस्वामिरक्षणा-

येश्वरं प्रार्थयामासुश्च. एवं प्रचलिते कोलाहले स दुष्टो रोशनवलि-श्छिन्नां स्वीयामंगुलिं प्रदर्शयन्—मदीयांगुलिच्छेदस्य फलं दर्शयितु-महमागत ' इति वदन्नजमीरनगर इतस्ततः परिबभ्राम.

अथ ते सर्वेऽपि यवनाः समं मीराखानेन वाजिविक्रेतृवेषां-स्त्यक्त्वा योद्धुं समनह्यन्. पृथ्वीराजोऽपि तान् युद्धोद्यतान्विज्ञाय स्वसेनां प्रेषयामास. सम्प्रवृत्ते युद्धे पृथ्वीराजस्य बहवः सैनिकाः समरांगणेऽशेरत.

ततः स मीराखानः पृथ्वीराजमवदत्—राजन् ! किमर्थं सैनि-कानां वृथा क्षयः ! युष्माभिः कश्चनैको वीरो निष्कासनीयः, तेन सममस्माकं वीरो युध्येत. अस्मिन् द्वन्द्वयुद्धे यत्पक्षीयो वीरो विजयेत स पक्षो यशस्वी संवृत्त इति वयं सर्वे वदामो यूयं चेति. पृथ्वीराजश्च तस्येदं भाषणमंगीकृत्य सर्वसामन्तानां महतीं सभां कारयित्वा समग्रमिदं वृत्तं निवेद्य सर्वानपि युद्धार्थं प्रोत्साहयामास. ते च सामन्ताः शूराअपि राज्ञा स्वयं प्रोत्साहिताअपि स्वपराभवेन राज्ञः पराभवं शंकमाना न शेकुस्तस्मिन् द्वन्द्वयुध्येऽभिनिवेष्टुम्.

शूरनरवीरश्चामुण्डरायः सर्वानपि सामन्तान् स्तब्धानवलोक्य स्वस्वाम्यपकीर्तिं परिजिहीर्षुर्विधित्सिते साहसे स्वोपास्यदेवताया भगवत्या अभिप्रायं जिघृक्षुस्तन्मन्दिरं गत्वाऽनन्यभावेन तामस्तौत्. परन्तु पूर्ववद्देवी प्रत्यक्षं नाभूत्. तेन च विस्मितश्चामुण्डरायो माहिषं बलिं कल्पयामास. ततोऽप्यसन्तुष्टां देवीं विलोक्य नितान्तं खिन्नः स्वयमात्मानं बलिं विधातुं खड्गं यदा निष्कोषमकरोत्,

तदा तु स्वशिरश्छेदनायोन्नमितं हस्तं स्वयं हस्तेन गृह्णन्ती देवी चामुण्डरायमवदत्—भक्तश्रेष्ठ ! प्रीताऽस्मि तवानेन भक्तिविशेषेण. परन्त्वास्मिन् भरतखण्डेऽतऊर्ध्वं यवनानां राज्यं भविष्यति. तेन युष्माकं यशःप्राप्तिर्न. यद्भावि तद्भाव्येव, न तत् कोऽप्यन्यथाकर्तुं समर्थः ! तथापि भाविनि युद्धे यदि त्वं योत्स्यसे तदा त्वामहं रक्षिष्यामि इति. अन्तर्दधे च शीघ्रमेव. चामुण्डरायश्चेदं भगवत्या वचनं निशम्य सन्तुष्टो गृहमाजगाम. अथ द्वितीयदिने पृथ्वीराजः पुनरपि सर्वेषां सामन्तानां सभां कृत्वा द्वन्द्वयुद्धार्थं सर्वान्विज्ञापयामास. तदा चामुण्डरायः—मीराखानपक्ष्येण केनापि योध्रा योद्धुं प्रतिजज्ञे. मीराखानोऽपि 'उजवकफकीर' नामानं वीरं युद्धार्थमयोजयत्. ततः प्रवृत्ते युद्धे चामुंडरायो भगवत्या रक्षितस्तं यवनवीरं शिरसि चिच्छेद. तदानीं पृथ्वीराजस्तत्पक्ष्याश्च सर्वे सामन्ताः स्वविजयं मन्यमाना महताऽनन्देन शंखनादं चक्रुः. यवनास्तु पराजयेन क्रुद्धा नानाविधान् दुराचारानकुर्वन्. स्वप्रतिज्ञां विस्मृत्य ते सर्वेऽप्ययुध्यन्त. अनहसागरतडागे गां हत्वा चिक्षिपुः. तेन क्रुद्धः स पृथ्वीराजः सर्वान् यवनान् हन्तुं स्वसैनिकानादिदेश. तेऽपि च प्रायः क्षत्रिया गोघातेन संतप्ताः सर्वानपि यवनान् स्वासिलतावलीनकार्षुः. स कपटी मीराखानोऽपि तस्मिन् समरदावानले शलभगतिमलभत.

एवं पराजितास्ते यवना पृथ्वीराजयशोहरणाय समागतास्तदीयं यशोऽवर्धयन्.

[ ३ ]

उपरिनिर्दिष्टो यवनमुख्यः स मीराखानो यदा भारतवर्ष-मागन्तुं प्रवृत्तस्तदा तस्य विवाहार्थं मातुलः ' ख्याजापीरो ' नाम यवनस्तत्रागच्छादिति पुरैव निवेदितं. सोऽपि मांत्रिकः स्वमंत्रसाम-र्थ्येन मीराखानं मृतं ज्ञात्वाऽत्यन्तं संतप्तः स्वभागिनेयवधस्य प्रती-काराय क्रमेणाजमीरनगरमाययौ. सोऽपि अनहसागरस्य तीरे रोशन-वलिरिव तस्थौ. नागरिकाश्च रोशनवलियवनस्य वृत्तं जानन्तः परं भीतास्तस्मिन्नेव क्षणे पृथ्वीराजाय तद्वृत्तं न्यवेदयन्. सोऽपि रोशनवलिशासनं तन्मूलकं च भयंकरं समरं प्रत्यभिजानंस्तं न पीडयितुं सर्वानादिदेश. तथाप्यपरं यवनं समागतं वीक्ष्य विस्मित-स्तस्मात्स्वस्य स्वराज्यस्य चानिष्टं शंकमानस्तस्य नाशार्थं क्षेत्रपालान् प्रार्थयत. तेऽपि प्रकटीभूय राज्ञा तस्य यवनसाधोर्नाशाय विज्ञप्ताः स्वानशक्तान् प्रदर्शयामासुः. ततश्च मंत्रिमंडलेन समं विचार्य पृथ्वीराजस्तस्य यवनसाधोर्मनोहरणाय सुन्दरीं तरुणीं प्रेषयामास. सापि तस्य यवनसाधोः समीपं गता तेनैव स्वमंत्रसामर्थ्येनापहृत-चित्ता तस्य दासी बभूव. पृथ्वीराजश्च सर्वमेतद्वीक्ष्यात्यन्तं विस्मितः किंकर्तव्यतामूढो बभूव.

अथ स्वामिनं चिन्तातुरं वीक्ष्य खिन्नः स्वामिभक्तश्चन्दवन्दी स्वयं पृथ्वीराजं ' स्वामिन् ? अहमेव गत्वा तस्य यवनसाधोः किमभिप्रेतमिति विज्ञाय प्रत्यागमिष्यामि ' इति कथयामास. पृथ्वी-राजस्तु दासीवृत्तेन तस्य यवनसाधोर्मंत्रसामर्थ्ये जातविश्वासः स्वस्य

द्वितीयं हृदयमिव, चंदबन्दिनं प्रेषयितुं साशंकोऽभूत्. ततश्च स्वामिकार्यदक्षः स चन्दः पृथ्वीराजं भूयोभूयो निवेद्यापनीतशंकस्तदाज्ञया तं यवनसाधुं ख्वाजापीरं द्रष्टुं ययौ. दृष्ट्वा च तं यवनं स्तुतिभिः अनुकूलं विधाय कविश्चन्दस्तं यवनमत्रागमनस्य कारणं पप्रच्छ.

एवं पृष्टः स ख्वाजापीरोऽवदत्—अहमस्मि तस्य मीराखानस्य मातुलः. यदा च मम भागिनेयः पृथ्वीराजं जेतुमत्रागतस्तदानीमेव 'यद्यहं पराजितः स्यां तदा भवता पृथ्वीराजो विजेय' इति विज्ञप्तस्तथाकर्तुमागतः. वयं च सर्वे परमैन्द्रजालिकविद्यां जानीमः. अस्मिन् भूविभागे यस्मान्मम भागिनेयस्य तथा तदनुयायिनां शोणितमपतत्तस्मादत्र पृथ्वीराजेनावस्थातुं नोचितम्. तेन चान्यत्र यत्रकुत्राऽपि स्वराजधानी कल्पनीया. किंवा तस्य मातामहेन प्रदत्तं दिल्लीनगरमेव राजधानीत्वेन कल्पनीयं. यदि पृथ्वीराजः स्वसेनाबलस्याभिमानाद्वा स्वसामर्थ्यगर्वेण वा नेदमनुष्ठास्यति तदाऽवश्यं स मत्तोऽनिष्टं लप्स्येतत्यत्र नास्ति संशयः. वयं तु महंमदीयमतानुयायिनः प्रथमं किंचिदपि कार्यं त्वरया नारभामहे, परन्तु समारब्धस्य परिसमाप्तिमविधाय न विरमामः. तत्त्वमितो गत्वा स्वस्वामिने सर्वं मदीयं भाषणं कथयित्वा तं सन्मार्गवर्तिनं कुरु. यदि त्वमपि मदीयं भाषणं मिथ्या मन्यसे तदेतः पंचमे दिने राजा स्वप्नं द्रक्ष्यति. यदि मदीयामाज्ञां पृथ्वीराजः स्वीकरिष्यति, तदाऽहं तस्मै सुवर्णमुद्राणां चतस्रः कोटीर्दास्यामि' इति. चन्दोऽपि तस्य यवनसाधोर्मधुरं दैविकशक्तिप्रदर्शकमिदं भाषणं निशम्य सन्तुष्टः पृथ्वीराजाय सर्वं वृत्तं न्यवेदयत्.

( ४ )

पृथ्वीराजस्तु चन्दस्य भाषणं निशम्य दुःखितः सर्वसामन्तानाहूय किंकर्तव्यमिति विचारार्थं महतीं राजसभां चकार. यथासनमुपविष्टेषु सर्वेषु पराक्रमशालिषु क्षत्रियवीरेषु स प्रसादी चन्दबंदी सर्वं तस्य यवनस्य भाषणं राजानुमत्या सर्वान् सभ्यानश्रावयत्. तच्चोग्रं भाषणं निशम्य संतप्ता अपि ते क्षात्रियश्रेष्ठास्तस्य यवनस्यैंद्रजालिकविद्यापाटवं स्मरन्तो भीतास्तूष्णीमतिष्ठन्. चन्दबन्दी तु पृथ्वीराजं तथा सर्वान् सभ्यानुद्दिश्येत्थमभाषत—क्षत्रियकुलावतंस ! सकलभूपालशिरोमणे ! पृथ्वीपते! स्वामिन्! सभ्या मद्देशबान्धवाः! अहं च स्वामिपादैरेतत्कार्यार्थमेव तस्य यवनस्यान्तिकं प्रेषितः. अहं चेतोगत्वा क्रमेण तस्य मैत्रीं संपाद्य सर्वं मनोगतमज्ञासिषम्. स च यवनसाधुः स्वसंबंधिनां घातेन क्रुध्दस्तच्छोणितांकितमिदं स्थानं जिघृक्षति. तास्मिन् यवनेऽस्ति काचन दैवी शक्तिरित्यत्र न संशयः. तदधुनाऽऽग्रहं विहाय विचारः करणीयः. स तु यवनः केवलमिदं नगरमेव याचते. तदहं मन्ये वयं सर्वेऽपीतो गत्वा दिल्लीनगरमेव राजधानीं कुर्मः. एतदर्थं स यवनोऽस्मभ्यं चतुष्कोटिपरीमितं सुवर्णनिधिं ददातीति. इदं च चन्दकवेर्भाषणं श्रुत्वा पृथ्वीराजः सर्वं तदीयं मित्रमण्डलं च तस्य यवनसाधोर्याचनां पूरयितुं निरणयन्. द्वितीयदिने पृथ्वीराजः समं मंत्रिमंडलेन तस्य यवनसाधोर्दर्शनार्थमगच्छत्. विनयेन च तं प्रणनाम. स तु यवनसाधुर्विनयिनं पृथ्वीराजमवलोक्य संतुष्टः ‘दिल्लीपते ! आगच्छ !’ इत्युच्चैः स्वागतं व्यधात्. राजाऽपि तस्य यवनसाधोर्दैविकशक्तिमत्वे जातनिश्चयः परमादरेणावर्तत.

अथ पृथ्वीराजस्त्य यवनसाधोर्निर्देशमनुसृत्याजमीरनगरं त्यक्त्वा दिल्लीनगरं प्रति प्रस्थातुं मनश्चक्रे. यद्यपि पृथ्वीराजः स्वपितृपितामहादिभिः पूर्वजैरुपभुक्तं समीपविराजमानपुष्करक्षेत्रमजमीरनगरं विहातुमत्यन्तमदुःखायत, तथापि चन्द्रकविप्रभृतिभिर्दिल्लीनगरस्य निवेदितां राजधानीत्वयोग्यतां निशम्य कथमपि अजमीरनगरवियोगदुःखमसहत. ततः सुमुहूर्ते सर्वान् स्वकोशांस्तथा सेनाविभागान् गृहीत्वा सर्वमजमीरनगरं तारागडदुर्गं यवनाधीनं विधाय दिल्लीनगरवासार्थमुत्सुकैः प्रजाजनैः सममिंद्रप्रस्थं गन्तुं प्रतस्थे. अलभत चाचिरात्तेन यवनसाधुना कथितं चतुष्कोटिमुद्राशालिनं सुवर्णनिधिं. तेन च तस्मिन् यवनसाधौ जातविश्वासः पृथ्वीराजोऽजमीरवियोगदुःखं व्यस्मरत्. क्रमेण गच्छन् मार्गे समरपतितानां स्वसैनिकानां मोक्षार्थं गयाक्षेत्रे सर्वेषां श्राद्धानि चकार.

ततः कतिपयादिवसैः स भाग्यशाली पृथ्वीराजः समं स्वमंत्रिमंडलेन कौरवपाण्डवाधिष्ठितं निर्मलनीलजलशालिन्या यमुनया समाश्लिष्टं, प्राचीनचन्द्रवंशसंभूतैराजर्षिभिः स्थापिताश्वमेधकनकदण्डमण्डितं, आश्चर्यकारिशिल्पविद्याप्रवीणैः शिल्पिभिः विरचितासंख्यमहासौधावलीमण्डितं, स्वसंपत्त्या तुच्छीकृतकुबेरैरिभ्यैर्नागरिकैः सुशोभितं, समीपतरविराजमानकुरुक्षेत्रं दिल्लीनगरं प्राप. सुमुहूर्ते च नगरं प्रविश्य मातृवंशीयैर्नृपैः पवित्रीकृतं सिंहासनमधिरुरोह.

सर्वे च नगरवासिनः स्वराजसिंहासनं रिक्तं वीक्ष्य दुःखायमानाः संप्रति स्वस्वामिदौहित्रेण प्रतापशालिना पृथ्वीराजेन समलंकृतं तत्सिंहासनं विलोक्य सर्वं प्राचीनं दुःखं व्यस्मार्षुः. वाचकाः ! इत्थं पृथ्वीराजोऽजमीराधिपत्यं विसृज्य दिल्लीपतित्वं स्वीचकार. यवनाश्चाजमीरप्रान्ते बद्धमूला अभवन्.



# तृतीयोगुच्छः।

१ पट्टणाधीशस्य अबूनराधीशेन समं युद्धप्रसंगः.

२ अबूनराधीशेन पृथ्वीराजस्य साहाय्ययाचनं.

३ युद्धं. पृथ्वीराजस्य विजयः.

४ इच्छिनीकुमार्याः पृथ्वीराजेन समं विवाहः.

(१)

पुरा खलु गुर्जरदेशे चालुक्यवंशीयो महाप्रतापी भोलाभीमदेवो नाम राजा राज्यमकरोत्. तस्य च राजधानी पट्टणं नाम अतिसुन्दरं नगरमासीत्. यद्यपि स प्रकृत्यैव शृंगारप्रियो विलासी तथापि दुर्गमण्डलस्याजय्यसैन्यस्य च साहाय्येन दुर्जयोऽभवत्. तस्य बहवः सामन्ता आसन्. स बहून्विदुषोऽपालयत्. प्रसिद्धोऽमरकोशस्य कर्ताऽमरसिंहो नाम जैनपण्डितस्तस्यैवाश्रित आसीत्. स चैकदा स्वान्तःपुरसहायैः समं विविधान्विलासान् कुर्वन्निदं वृत्तमशृणोत्.

अबूप्रदेशे जैतप्रमारनामा राजा यथानियमं स्वप्रजाः पालयन् राज्यं करोति. तस्य सलखनामा पितृभक्तः पुत्रः, इच्छिनीकुमारी नाम कन्येत्यपत्यद्वयमास्ति. तत्रेच्छिनीकुमारी साम्प्रतं षोडशवर्षदेशीया परमलावण्यखनिः पृथिवीवातिनी तिलोत्तमेव भाति. तस्याश्च मयूरपिच्छभारगर्वहारी केशकलापः, सुवर्णपट्टविशदं ललाटपटलं, मदनशरासनापमानकारिण्यौ भ्रुवौ, जितशुकचंचुर्नासिका, अधरीकृतविम्बफलोऽधरोष्ठः, कम्बुरिव मनोहारिणी ग्रीवा, विसतन्तू इव कोमले वाहुलतिके, नूतनविकासिकमलकुड्मलद्वयमिव मूर्तिमल्लावण्यनिधिद्वयमिव, द्विधाभूतं मूर्तं भोक्तुर्भाग्यमिव नूतनं कुचयुगलं, परमसूक्ष्मं त्रिवलीसमलंकृतमुदरं, रंभासौन्दर्यप्रवर्धके सक्थिनी मंजुलमंजीरसमलंकृतौ गुल्फौ, नवकिसलयमृदुनी प्रपदे, कोकिलविभ्रमकारी मधुरो रवः; किंवहुना सर्वमेव गात्रं विधात्रा स्वकौशलप्रदर्शनायैव निर्मितम्. साम्प्रतं तु सा संचारिणी रतिरिव लीलयैव तरुणानां राजपुत्राणां मनांस्याकर्षति. न जाने तस्या अलौकिकसौन्दर्यस्य भोक्तारमिह भारतवर्षे कमजनयद्भगवान्विधातेति.

श्रुत्वा चेदं वृत्तं स भीमदेवः कामाकुलस्तां याचितु स्वाश्रितममरसिंहपण्डितं जैतप्रमारराजस्य समीपे प्रेषयामास. न्यवेदयच्च तन्मुखेन—राजन् ! तव कन्या विवाह्यो लावण्यशालिनीत्यस्माभिः श्रुतम्. वयमपि बलाढ्या अनेकसामन्तपरिवृतास्तया सह विवाहं कर्तुमिच्छामः. तदस्मान् संवंधयोग्यान् ज्ञात्वा यदि स्वकन्यामस्मभ्यं समर्पयिष्यसि तदा तव कुशलं भविष्यति, अन्यथा तु अस्माभिराक्रान्तो

राज्यं जीवनं च हास्यसि. तत्त्वया युक्तायुक्ते विचार्य यदभीष्टं तत्करणीयमिति. सत्वमरसिंहः स्वस्वामिसंदेशं गृहीत्वा तस्य जैतप्रमारस्य राजधानीमबूनगरं प्राप्य राज्ञे स्वागमनं निवेदयामास. सोऽपि विद्वदादरपरः प्रमारराजस्तं सत्कार्यागमनकारणमपृच्छत्. अमरसिंहोऽपि स्वस्वामिनिदेशं कथयामास. स तु प्रमारराजस्तस्य भीमदेवस्य संदेशं निशम्य कोपाकुलः पुत्रीयाचनेन स्वापमानं मन्यमानः सहसैव तां याचनां निषिध्य अब्रवीत्—पंडितराज ! अमरसिंह! त्वमितोगत्वा स्वस्वामिनं वद—भीमदेव ! त्वं हि वार्धक्यनष्टप्रज्ञोऽसि. यतः कः खलु षोडशवर्षदेशीयां तरुणीमात्मनः कन्यां त्वादृशाय जरठाय पलितशुक्लशिरसे वृद्धाय व्याघ्राय वत्सतरीमिवोपहारीकुर्यादिति नातर्कयः. अस्मिञ्जगतीतले राज्यं पुत्रकलत्रादिकं सर्वमेव नश्वरं. केवलं चन्द्रधवलं यशो गाढान्धतमसमलिनमयशो वा द्वयमेव शाश्वतं. तन्नश्वरस्य राज्यस्य वा देहस्य वा लोभेन 'प्रमारराजः स्वराज्यलोभेन स्वात्मजां जरठाय प्रादात्' इति मलिनं चिरस्थाय्ययशः संपादयितुं नेच्छामि. त्वं च मत्तो बलिष्ठोऽसीत्यहमपि जानामि, तथापि केवलं सैन्यबलभीतस्तुभ्यं न स्वकन्यां बलिं करोमि. यत्खलु भाग्यायत्तं तद्ब्रह्माऽपि अन्यथाकर्तुं न प्रभवतीति सत्यं विद्धि. इति.

स चामरसिंहस्ततोनिर्गतः सर्वं वृत्तं तथैव स्वस्वामिने निवेदयामास. श्रुत्वा च तत्प्रत्युत्तरं मानी भीमदेवः कोपाकुलः स्वसेनापतिं सेनासन्नाहार्थमादिशत्.

( २ )

स च परमारजैतश्चारमुखेन भीमदेवस्य कोपं तथा सेनासन्नाहं च ज्ञात्वा स्वसेनामपि समनह्यत्. स स्वमंत्रिमण्डलमाहूयैतत्संकट-निवारणार्थं मंत्रयामास. मंत्रिमण्डलमपि भीमदेवस्य याचनामन्याय्यां मन्यमानं तेन योध्दुं सन्नध्दमभवत्. राजा प्रमारजेतः स्वस्य बलं भीमदेवबलादतिन्यूनं मन्वानः कस्यचिद्बलिष्ठस्य साहाय्यं याचितु-मिच्छन् सकलभूपालरत्नं न्याय्यान्याय्यविचारदक्षं पृथ्वीराजमेव समर्थं भावयंस्तमेव साहाय्यार्थमयाचत. प्रैषयच्च दूतं स्वहस्तलेखेन समं. स च लेख इत्थम्—

राजाधिराज ! सकलभूपालचूडामणे ! सकलसामन्तनक्षत्रमंडल-सुधांशो ! दिल्लीपते ! चक्रवर्तिन् ! पृथ्वीराज ! अबूपतिर्जैतप्रमार-स्तुभ्यं नमस्कृत्य प्रार्थयते. एष गुर्जराधिपो भीमदेवो बलोन्मत्तो वृद्धोऽपि तरुणवत्कामाकुलो मदीयां दुहितरं याचते. अन्यथा राज्यहरण-मपि करिष्यामीति वदति. अहं तु तादृशाय वृद्धाय कन्यायाः प्रदा-नमनुचितं मन्यमानः स्वशीलरक्षणाय प्राणानपि त्यक्ष्यामि. तद्यदि मदीयं कृत्यं न्याय्यं भवान् मन्यते तदा भविष्यति युद्धे साहाय्यं करोतु इति.

स तु दूतस्त्वरया दिल्लीनगरं गत्वा स्वागमनं निवेद्य द्वारपालैः प्रवेशितः पृथ्वीराजाय तं लेखमदात्. पृथ्वीराजोऽपि स्वमित्रमण्डलं मंत्रिमण्डलं चाहूय सर्वं वृत्तं निवेद्य किमत्र विधेयमित्यपृच्छत्. ते अपि सम्यग्विचार्य प्रमारजैतराजस्य साहाय्यविधानेऽनुमतिं प्रादर्शय-

ताम्. पृथ्वीराजोऽपि जैतप्रमारस्य साहाय्यविधाने लाभान्तरमपि ददर्श. तच्चेदं-पुरा खलु पृथ्वीराजस्य पिता सोमेश्वरो गुर्जराधिपेन भीमदेवेन सममयुध्यत. तत्र भीमदेवः स्वयमेव सोमेश्वरं जघान. तेन तं भीमदेवं पितृघातकं पृथ्वीराजः परं वैरायतेस्म. अस्मिन् समये मित्रसाहाय्यविधानेन कीर्तिलाभोऽपि भविता वैरनिर्यातनमपि.

तदिदं सर्वं विचिन्त्य पृथ्वीराजो भीमदेवशासनार्थं गुर्जरदेशं गन्तुं मनश्चक्रे. अचिरादेव जंगमसागरोपमं चतुरंगमण्डितं सैन्यं दिल्लीनगराद् गुर्जरदेशमभिलक्ष्य प्रतस्थे. पृथ्वीराजश्च महान्तं गजराजमारुह्य वन्दिजनोच्चारितजयजयकारः, अविरतोद्धूयमानचामरयुगलतया सततं निपतन्मन्दाकिनीप्रवाहद्वयविराजमानस्य हिमालयस्य सादृश्यं बिभ्रत् , शारदज्योत्स्नाधवलं, प्रजाजननेत्रानन्दकरं श्वेतच्छत्रं पुरतो वहन् महतोत्साहेन जैतप्रसारराजस्य साहाय्यार्थं निर्जगाम. तदानीं तस्य सेनायां कयमाषामात्यः चन्दकविः चन्दपुण्डिरचामुण्डरायनीरधररायराठोडकुंभदेवजामयादवबलिभद्रप्रभृतयः शूराः सामन्ता हाहुलीरायलंगडीरायप्रभृतीनि मित्राणि पृथ्वीराजस्य पितृव्यः कन्हचव्हाणोऽपि अन्ये च बहवः शूरा व्यराजन् .

गुर्जराधिपतिर्भीमदेवोऽपि प्रमारजैतं युद्धसंनाहोद्यतं वीक्ष्यतत्साहाय्यार्थमागच्छन्तं दिल्लीपतिं निशम्य स्वसेनां सयत्नं समनह्यत्.

अथ पृथ्वीराजो युद्धनीतिमनुसृत्य सामोपायेन तं भीमदेवं युद्धात् प्रतिनिवर्तितुं स्वस्य परमं मित्रं लोकोत्तरप्रज्ञाशालिनं चन्द-

कविं दूतत्वेन प्रेषयामास. सोऽपि च गत्वा राजसभां सिंहासना-
धिष्ठितं भीमदेवं—गुर्जराधिपते ! भीमदेव ! दिल्लीपतिः पृथ्वीराजस्त्वा-
मुपदिशति युद्धान्निवर्तस्व इति. यतस्त्वयैव प्रथमतोऽधर्मं कृत्वा तस्य
प्रमारजैतस्य कन्या विवाहार्थं याचिता. ततश्च तुभ्यं वृद्धाय स्वात्म-
जां दातुमनिच्छता तेन समं युद्धार्थं प्रवृत्तोऽसि. स च प्रमारजैतो
यस्मै कस्माअपि स्वकन्यां ददातु. तत्र हठस्य कोऽवकाशः. तद्यदि
वृथाऽऽग्रहं परित्यज्य युद्धान्न निवर्तेथास्तदा महदनिष्टं भविष्यतीति.
जगाद. स तु गुर्जराधिपस्तच्चन्दकवेर्मुखान्निर्गतं पृथ्वीराजसंदेशं नि-
शम्य क्रुद्धः सकोपं—रे बन्दिपुत्र ! चन्द ! किमिति प्रलपसि. त्वमितो
गत्वा राजानं वद—न्याय्यान्याय्यविचारं वयं क्षत्रियाः शस्त्रेणैव कुर्मो
न ब्राह्मणवत् पुस्तकमालोच्य. अहं तु पश्यामि मम कन्यायाचना
न्याय्यैवेति. यतः सर्वरत्नानां भाजनं राजेति सर्वशास्त्रकारा वदन्ति.
" जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते" इतिन्यायेन जैतप्रमारस्य
कन्याऽपि नारीरत्नं. तेन मया सा राज्ञा भोक्तुं याचितेति. तत्त्वं स्वस्वा-
मिनं सम्यक्प्रबोध्य कथय—भीमदेवः कथयति—पृथ्वीराज ! अद्यापि
युद्धारंभान्निवर्तस्व. अन्यथा स्वपितृदशामचिरादेव लप्स्यस इति
चन्दकविश्च स्वस्वामिनिन्दामाकर्ण्य क्रुद्धोऽपि दूतत्वभंगभिया न किं-
चिदप्युवाच. आगच्छच्च पृथ्वीराजस्य विस्तीर्णं स्कन्धावारम्.

( ३ )

पृथ्वीराजश्च स्वदूतस्य चन्दकवेर्मुखात् सर्वं भीमदेवसंदेशं
निशम्य रुष्टस्तस्मिन्नेव क्षणे युद्धप्रारंभार्थं स्वसेनापतिमादिदेश.

अचिरादेव भीमदेवोऽपि स्वीयमाश्विकदलं पदातिदलं च गृहीत्वा पृथ्वीराजसेनाभिमुखो बभूव. एवं कुरुक्षेत्रे प्रबलयोः कौरवपांडवयोः सेनेइव तयोरपि सेने साभ्रमत्या नद्या उभयकूलयोरतिष्ठताम्. पृथ्वीराजसेनां च सम्यक् व्यवस्थाप्य भीष्मसमो युद्धकुशलो वृद्धः पृथ्वीराजस्य पितृव्यः कन्हचव्हाणः शत्रुभिर्दुर्भेद्यान् सेनाव्यूहान् कल्पयामास. पृथ्वीराजश्च स्वसेनाया आधिपत्ये महाप्रतापिनं द्वितीयमर्जुनमिव शरसंधाने स्वामिभक्तं कर्तव्यपरायणं नीरधररायराठोडमभिषिच्य स्वहस्ते तदीयं हस्तं गृहीत्वा प्रेम्णाऽवदत्. सेनापते! एतेषां सर्वेषां सैनिकानां प्राणा मम च प्राणा यशश्च सर्वमेव त्वदायत्तं. एष ह्यवसरो युद्धशास्त्रचातुर्यप्रदर्शनस्य. तत्त्वं शस्त्रविद्यापाटवप्रदर्शनेन रिपून्विजित्य स्वस्वामियशो धवलीकुरु ' इति.

स तु स्वामिभक्तः सेनापतिः साक्षात् पृथ्वीराजस्येदं समुत्तेजकं भाषणं निशम्य सन्तुष्टः सावेशं तं प्रत्युत्तरयामास—स्वामिन्! नास्त्यत्र किमपि चिन्ताकारणं! स्वामिना मम सैनिका युद्धमानाः कीदृशानि शौर्यकृत्यानि कुर्वन्ति तत्केवलमवलोकनीयम्. सामन्तवर्गश्चाचिरादेवास्मच्छत्रुं कांदिशीकं करिष्यति. अनुभूतानेकयुद्धाः स्वामिनां पितृव्यचरणाः सर्वथाऽस्मान् साहाय्ययिष्यन्ति. तेन निःसंशयमस्माकमेव विजयो भवेदिति.

राजा च तस्य सेनापतेरिदं भाषणमाकर्ण्य सन्तुष्टस्तस्मा एकां मुक्तामालां ददौ. ततश्च स्वयं महान्तं सुलक्षणं सुशिक्षितमश्वमारुह्य पितृव्यसेनापतिभ्यां समं सर्वं सैन्यं निरीक्षमाण इतस्ततः परिभ्राम्य

अचिरादेव चोभयसैनिकाः परस्परानाक्रम्य सावेशमयुध्यन्त. खड्गिनश्च स्वखड्गप्रहारैः शत्रुपक्ष्याणां खड्गिनां गात्राणि शकलयामासुः. धानुष्काश्च स्वबाणैर्दूरवर्तिनामपि धन्विनां प्राणानहरन्. मत्ता इभाश्चेतस्ततः संचरन्तः स्वपादाघातैः सहस्रशो मानवानचूर्णयन्. सादिनश्च स्वभल्लक्षेपैः परेषामुदराणि विदारयामासुः

अथोभयसैनिकेषु परं युद्धकौशलं प्रकटयत्सु दोलायमानां विजयलक्ष्मीं वीक्ष्य पृथ्वीराजश्चिन्तातुरो बभूव. पितृव्यः कन्हचव्हाणः स्वभ्रातुष्पुत्रस्य मुखकमलं म्लानं वीक्ष्य चिन्तापरिहारार्थं सोत्साहमवदत्—तात! पृथ्वीराज! किमित्यस्मासु जीवत्सु त्वं युद्धविजयस्य चिन्तां वहसि. वयं चानेकयुद्धेषु संपादितविजया अस्मिन्युद्धविजये न संशयमपि कुर्म इति.

पृथ्वीराजश्च स्वपितृव्यस्योत्साहप्रदं भाषणं श्रुत्वा सस्मितवदनकमलः 'पितृव्यचरणाः! सत्यमेवेदं. नात्राणीयानपि संशयः. अहमपि युष्मासु युष्मद्युद्धकौशले च सर्वथा विश्वसिमि. तथापि समय एव सर्वेभ्योऽपि बलीयान्. कथमन्यथा प्रबलोऽपि सुग्रीवः केवलं स्वजायामपि रक्षितुं न प्राभवत्? साक्षादीश्वरस्यावतारो रावणारिरपि रामचन्द्रो दण्डकारण्ये स्वपत्नीं सीतादेवीमपि त्रातुमसमर्थो बभूव? पंचसु पांडवेषु जीवत्सु भीष्मद्रोणादिषु योधृषु द्रौपदी स्वलज्जारक्षणाय भगवन्तं यशोदानन्दनमेव प्रार्थयामास? तत् वयं तु केवलं स्वकर्तव्यविधाने दक्षा भविष्यामः. अतःपरं सर्वं दैवायत्तमित्यब्रवीत्.

सोऽपि वृद्धस्तत्पितृव्यः पृथ्वीराजस्य सर्वमिदं वचनं सत्यमित्यंगीचकार.

अथ पृथ्वीराजसैनिका अतिशौर्येण युध्यमानाः प्रबलानपि स्वशत्रूनत्यक्रामन्. गुर्जराधिपसैनिकाः पृथ्वीराजसैनिकप्रहारानसहमानाः पलायितुमारभन्त. वीरो भीमदेवस्तु पलायमानान् कांदिशीकान् स्वसैनिकानवेक्ष्य खिन्नः क्रोधसंतप्तः स्वयमेवाग्रेसरो भूत्वा प्रबलं युद्धं प्रावर्तयत्. शीघ्रमेव च सोऽपि खड्गप्रहारप्रसरद्रुधिरस्रावदिग्धः प्रफुल्लपलाशवृक्ष इव समरभूमावशेत. गुर्जराधिपं समरनिपतितं वीक्ष्य पृथ्वीराजः स्वसैनिकान् युद्धान्निवर्तयितुं नियतं शंखनादमकरोत्. निशम्य च तं शंखनिनादं सर्वेऽपि पृथ्वीराजसैनिकाः स्वविजयं मन्यमाना आनन्देन सिंहनादान्विससर्जुः. मोदेन च यथेच्छमनृत्यन्. यद्यपि पृथ्वीराजपक्ष्या अपि अगणिता वीराः समरदावानलेऽपतन्, परन्तु गुर्जराधिपस्य भीमदेवस्य पतनेन निष्प्रतिबंधा विजयश्रीः पृथ्वीराजमाश्लिषत्. पृथ्वीराजोऽपि दयासागरो युद्धं परिसमाप्य सर्वानपि सैनिकान्विद्धान् पारितोषिकवितरणैरनुजग्राह.

( ४ )

अथ प्रमारजैतो विजयश्रिया समलंकृतं स्वसाहाय्यकारिणं पृथ्वीराजं परमादरेण स्वयमागत्य स्वराजधानीं निनाय. पृथ्वीराजोऽपि अतिसुन्दरं, गगनविहारिणीभिश्चित्रविचित्राभिः पताकाभिः समलंकृतं, प्रतिगृहविराजमानतोरणावलीमनोहरं, प्रतिस्थलस्थापितपूर्ण-

घटसुशोभितं, अविरतध्वनत्पटहढक्कादिवाद्यजातसुरम्यं, संस्कृतवीथ्याकं, राजधानीमबूनगरं प्रविश्य स्थानेस्थाने नागरिकमुख्यैः कृतं सत्कारविशेषं गृह्णन्नतिमनोरमं, विविधकुसुमितलताकुंजमयं, सहकारादिवृक्षजातनिवारितातपं, राजाराममागत्य कल्पिते राजप्रसादकल्पे निवासेऽवसत्. वृद्धः प्रमारजैतः स्वसाहाय्यं विधाय स्वराज्यरक्षणेन च कृतज्ञस्तथा पृथ्वीराजमसेवत यथा पृथ्वीराजस्तत्सामन्ता मित्रमंडलं च परं मुमुदे.

ततः कतिपयदिवसैः प्रमारजैतः स्वमंत्रिमण्डलमाहूय विचारयति स्म. इदानीं चाहं वृद्धः. मदीयः पुत्रः सलखस्तु बालएव. कन्या तु इच्छिनीकुमारी लावण्यवती विवाहार्हा संवृत्ता. तत्पुनरपीदृशी विपत्तिर्मागच्छत्विति तस्या विवाहः शीघ्रमेव करणीयः. अहं च यावत्पश्यामि तावत्पृथ्वीराजादन्यं सुयोग्यं वरं नावधारयामि. पृथ्वीराजेन चास्मिन्युद्धे साहाय्यविधानेन वयं सर्वेऽप्युपकृताः. मदीया कन्याऽपि दिल्लीपते राज्ञी भवितुं सर्वैर्गुणैरर्हैव. तदस्मै दुर्लभाय गुणवते पृथ्वीराजाय कन्यां दत्वा युवराजं च राजासनेऽभिषिच्य चरमवयोयोग्यमात्मसाधनं कर्तुमिच्छामीति. अयमर्थश्च सर्वेषां मंत्रिणां सम्मतो बभूव.

ततः शुभलग्ने प्रमारजैतः पृथ्वीराजाय साहाय्यविधानपारितोषिकमिव, मूर्तं युद्धयशइव, खड्गार्जितां विजयश्रियमिव तां लावण्यखनिमिच्छिनीकुमारीं समर्प्य कृतकृत्यो बभूव. पृथ्वीराजोऽपि

तां सकलस्त्रीललामभूतां सौन्दर्यखनिं लब्ध्वाऽऽत्मानं कृतकृत्यं मन्यमानः कतिपयदिवसांस्तत्रोषित्वा स्वराजधानीं प्रययौ.

दिल्लीनगरवासिनस्तु स्वस्वामिनं समरविजयिनं स्वामिनीयुक्तं श्रुत्वाऽनन्दसागरपारगामिनो हर्षातिरेकेण कृत्स्नं नगरं सुशोभयित्वा नानाविधैरुपचारैः स्वराजनिष्ठां प्रीतिं च प्रदर्शयामासुः.

पृथ्वीराजोऽपि स्वराजधानीं प्रविश्य स्वप्रजानां स्वस्मिन्नकृत्रिमं निरतिशयं प्रेम वीक्ष्यात्मानं धन्यममन्यत.



# चतुर्थोगुच्छः ।

१ पद्मावतीपरिणयः.

२ महोबाधिपेन समं कलहोद्भवः.

३ पृथ्वीराजस्य महोबाराज्याक्रमणं.

४ युद्धं महोबाधिपस्य पलायनं.

५ महोबाराज्ये स्वाधिकारः.

( १ )

एकदा पृथ्वीराजे स्वमंत्रिभिः समं विविधानि राज्यकार्याणि कृत्वा विश्रान्त्यर्थं राजोपवनं प्रविश्य कस्यचिन्महतश्चूतांकुरशालिनः सहकारस्याधस्तात्स्थिते सत्यकस्मादतिमनोहरः शुकः स्वचंचुविधृतं पत्रं तस्य पुरस्तादक्षिपत्. दिल्लीपतिरपि विस्मितस्तदुद्घाट्यापठत्—तच्चेत्थं—

सकललोकपालक ! नृपतिकुलतिलक ! शत्रुकण्ठनालविदारणमृगेन्द्र ! दिल्लीपते ! मामसहायामपरिणीतां त्वद्गुणानुरक्तां त्वदन्य

पुरुषं पितरं मन्यमानां पूर्वस्यां दिशि वर्तमानस्य समुद्रशिखरराजधानीकस्य यदुकुलोत्पन्नस्य विजयसुरनाम्नो भूपस्यैकाकिनीं पद्मावतीं कन्यामवेहि. अहं च विविधदेशपर्यटनतत्पराणां बन्दिजनानां मुखात्संचरन्तीं तव शारदज्योत्स्नासहचरीं कीर्तिं निशम्य संजातप्रेमोदया त्वामेव वरीतुं निरचिनवम्. तद्यदि दीनकृपालुता स्यात्तदा त्वन्मार्गनिहितनेत्रां मां रुक्मिणीं यशोदानन्दन इव सत्वरमागत्य गान्धर्वविवाहेन परिणीय गृहीत्वा गच्छ. नचेदहमचिरादेव भारभूतानिमान् प्राणान्विसृज्य स्वर्गे त्वदागमनं प्रतिपालयन्ती स्थास्यामीति.

पृथ्वीराजश्चेमां प्रणयपत्रिकामनुवाच्य सन्तुष्टः ' सत्वरमागच्छामि ' इत्यर्थबोधकं प्रत्युत्तरं लिखित्वा तस्यैव शुकस्य मुखे निधाय तं प्रैषयत्. सोऽपि च गत्वा स्वस्वामिन्यै तत्पत्रं ददौ.

अथ पृथ्वीराजो महत्या सेनया समं तस्य विजयसुरस्य राजधानीं समुद्रशिखरनगरं ययौ. ततश्च तत्र पद्मावतीं गान्धर्वविवाहेन परिणीय प्रतिनिवर्तमानो मार्गे पूर्वं जितेन गिझनीश्वरेण शहाबुद्दीननाम्ना यवनाधिपेन सह महायुद्धं व्यतानीत्. तस्मिन्युद्धे ते महंमदीया यवना अतिक्रूरा विकरालरूपाः संचारिणस्तालवृक्षाइव क्रव्यादा अतिक्रूराणि कृत्यान्यकुर्वन्. तथापि लोकोत्तरशौर्याः क्षत्रियश्रेष्ठाः. पृथ्वीराजसैनिकास्तान् सर्वानपि यवनान्विजित्य कांदिशीकांश्चक्रुः. स तु गिझनीश्वरो धृष्टः शहाबुद्दीनः स्वयं पुनरपि जीवग्राहं गृहीतः पृथ्वीराजेन कारागृहे स्थापितोऽष्टसहस्रसंख्याकानश्वान्वितीर्य पुनरप्यात्मानं मोचयामास. पृथ्वीराजश्च विजयश्रिया मूर्तया लक्ष्म्या पद्मावत्या समाश्लिष्टः स्वराजधानीं ययौ.

( २ )

पृथ्वीराजे महंमदीयेन शहाबुद्धीनघोरिणा सह युद्धमाने तदीयाः केचन सैनिकाः क्षतशरीरा दिल्लीमार्गं विस्मृत्यान्यमार्गेण प्रवसन्तो भ्रान्त्या चन्देलप्रान्तस्य राजधानीं महोबानगरं प्राप्ताः. ते च श्रान्ता विश्रान्त्यर्थं राज्ञ उपवनं प्रविष्टास्तदधिकृतेन निषिद्धास्तं हत्वाऽन्तः प्राविशन्. तस्यारामपालकस्य पत्नी भर्तृवधदुःखाकुला सर्वं वृत्तं राज्ञे परमालाय न्यवेदयत्. परमालराजश्च स्वसेवकवधेन संतप्त उदलनामानं स्वसामन्तमाहूय तेषां प्रमत्तानां सैनिकानां शासनायादिदेश. सोऽपि स्वामिनियोगमनुसृत्य तानाक्रम्य सर्वेषां तेषां शिरश्छेदमकरोत्.

परमालराजस्तु कुजनपरिवृतस्तं विजयशालिनं कृतकार्यं सेवकमनभिनंद्य तस्य सुन्दरमश्वमेवायाचत. तस्योदलस्य ‘ अलह ’ नामा बन्धुरासीत्. स च जात्या क्षत्रियः स्वाश्वयाचनेनात्मनोऽपमानं मन्यमानो मातरमापृच्छय तां याचनां निषिषेध. राजा च स्वयाचनां निषिद्धां वीक्ष्य कुपितस्तौ द्वौ बन्धू स्वराज्यादत्यवासयत्. तावपि शूरौ मूर्खस्यास्य राज्ञो राज्येऽवस्थानापेक्षया सुराज्येऽवस्थानमुचितमिति मन्वानौ कनोजाधिपस्य गुणग्राहिणो जयचन्दस्य राज्यमाजग्मतुः. राजा जयचन्दोऽपि श्रुततत्कीर्तिस्तौ सादरमानीय स्वराजसभायां परमे प्रतिष्ठापदेऽस्थापयत्. तावप्यानन्देन तमसेवेताम्.

अथ पृथ्वीराजः स्वदूतमुखान्महोबाधिपस्य स्वसेवकशिरश्छेदरूपं दुष्कर्म निशम्य संतप्तस्तस्य प्रमत्तस्य महोबाधिपस्य शासनाय

मतिमकरोत्. अचिरादेव च सर्वतः स्वसामन्तानाहूय तेभ्योऽपि महोबाधिपस्य दुष्कर्म निवेद्य तानपि स्वमतवर्तिनो व्यधात्.

( ३ )

एवं सर्वां सेनां तथा शूरान् स्वसामन्तान् सनाह्य महता जवेन पृथ्वीराजः परमालराजस्य राज्यं प्रविश्यासंख्यानि नगराणि विजित्य सर्वान् शत्रुपक्ष्यानवधीत्. सीमारक्षकाश्च यथाशक्ति युध्वा तं पृथ्वीराजसेनासागरं रोध्दुमशक्नुवाना रणांगणेऽशेरत. अन्ये च भीत्या पलायमाना इदं वृत्तं स्वराजाय परमालाय न्यवेदयन्. परमालराजोऽपि सम्यक्ज्ञातपृथ्वीराजसामर्थ्यः परं भीतः किंकर्तव्यतामूढः सर्वानपि स्वसामन्तानेकत्रीकृत्य साम्प्रतं किंकर्तव्यमिति विचारयामास. तेऽपि सर्वे सामन्ता पृथ्वीराजसामर्थ्यापेक्षया स्वसामर्थ्यं हीनं मन्वानास्तूष्णीं तस्थुः. केचन 'नास्ति साम्प्रतमस्मासु सर्वेषु सामन्तेषु पृथ्वीराजेन समं योध्दुं समर्थः कोऽपि. तदितः केनापि कारणेन निर्वासितं, अतुलशौर्यशालि, कनोजाधिपाश्रयि 'अलह' 'उदल' नामकं बन्धुद्वयं पुनरपि प्रार्थनया स्वराज्यमानयनीयं. तच्चेदत्रागत्यास्मदनुरोधेन युध्येत तदाऽवश्यं पृथ्वीराजः पराजप्यत इत्यवदन्. युवराजश्च तारुण्यसंपन्नस्तेषामिदं निरुत्साहकारि वचनं निशम्य क्रुद्धः—भो क्षत्रियश्रेष्ठाः ? इदं खलु वचनं वः क्षत्रियकुलोत्पन्नानां न शोभते. येषां च पूर्वजाः शत्रुभिराक्रान्ताः पुष्पराशाविव महताऽनन्देन समरभूमावशेरत तेषां वंशजानां मुखेभ्यः इमानि भयविव्हलानि वाक्यानि कथं निर्गच्छन्तीति न जाने. यद्यपि बलवान्

पृथ्वीराजस्तथापि यथाशक्ति प्रकटितशौर्यो हताः स्वर्गं लप्स्यामहे. यदि च कोऽपि तेन पृथ्वीराजेन समं योध्दुमस्मत्सामन्तेषु न शक्नोति तदाऽहमेकाकीतो निर्गत्य तेन समं युध्वा पुण्यां गतिं प्राप्नुयाम् ? इत्यवदत्.

युवराजस्य कोपकलुषमुत्तेजकं वाक्यं निशम्य समाविष्टपौरुषाः प्रकटितशौर्यभावास्ते सर्वेऽपि सामन्ताः स्वस्वसैन्यं गृहीत्वा पृथ्वीराजेन समं योध्दुं मतिमकुर्वन्. तेषु च परमालसामन्तेषु प्रमुखाः मलखान,अरिसिंह,वरसिंह,नरसिंह,जयसिंहनामानः पंच सामन्ता आसन्. तेच स्वामिकार्यार्थे स्वप्राणानपि तृणीकृत्य स्वसेनां गृहीत्वा पृथ्वीराजेन समं योध्दुं प्रातिष्ठन्त. अचिरादेव ' सिरसवा ' नाम्नो ग्रामस्य समीपे कृतनिवासां पृथ्वीराजसेनामालोच्य महता त्वेषेण तामाक्रम्य युद्धं प्रावर्तयन्त.

अस्मिन् युद्धे उभयपक्षसामन्ता व्यक्तिशोऽयुध्यन्त. परमालपक्ष्यो मलखानः स्वशत्रोः पक्ष्यं कयमाषप्रधानमाचक्राम. एवमेव पृथ्वीराजपक्षीयश्चन्दपुण्डीरः स्वप्रतिस्पर्धिनं नरसिंहं, चामुण्डरायश्च प्रतिपक्ष्यं जयसिंहं महता सावधानेनाचक्रमतुः. ते सर्वेऽपि स्वामिभक्ताः स्वस्वामिकार्यसिध्यर्थे परां काष्ठां चक्रुः.

एवं प्रवृत्ते प्रलयकालसहोदरे, भयंकरसिंहनादसंकलितधनुष्टंकारघोषबधिरितजनश्रवणपुटे, यमलोकस्थकारागारसदृशे संग्रामे बहवः शूरा वीराः छिन्नकण्ठनालप्रवहद्रुधिरधाराभिर्मृत्युलोके परम-

प्रवृद्धं द्वेषाग्निं शमयितुमिच्छन्तइव धरणीतले पेतुः. अन्ये च युद्धमदोन्मत्ताः शत्रुद्वेषपरिपूर्णाः छिन्नेष्वपि मस्तकेषु कबंधतां प्राप्य शत्रुपक्षीयान् सैनिकानघ्नन्.

अथ पृथ्वीराजपक्षीयः पराक्रमी चन्दपुण्डीरः स्वप्रतिपक्षीयस्य नरसिंहस्य शिरोऽच्छिनत्. तेन च तस्य सेनां पलायमानां वीक्ष्य शीघ्रमेव वरसिंहो नाम परमालसामन्तस्तत्स्थानं समलंचकार. अचिरादेव सोऽपि नरसिंहगतिमेवालभत. एवं कृतान्तसमो भगवतीप्रसादशाली चामुण्डरायोऽपि जयसिंहं विजयतेस्म. स्वप्रतिस्पर्धिनो जयसिंहस्य सेनां तच्छरीरेण समं जर्जरितामकरोत्. ततश्च सर्वतः पृथ्वीराजसामन्तैः पराभूतां निहतप्रमुखां स्वसेनां वीक्ष्यावशिष्टाः सर्वेऽपि परमालसामन्ता भीतिसमाक्रान्तहृदयाः पलायमानाः कांदिशीका बभूवुः. विजयश्रीरपि संतोषेण दिव्यपारिजातपुष्पमण्डितां विजयमालां पृथ्वीराजकण्ठे समर्पयत्.

४

अथ दूतसमानीतं स्वसेनापराजयवृत्तं निशम्य दुःखाकुलो वृद्धः परमालराजः किंकर्तव्यतामूढः सर्वानप्यवशिष्टान् मंत्रिणः समाहूय युवराजेन ब्रह्मजिता राज्ञ्या च समं मंत्रयाचक्रे. महाराज्ञी पतिव्रताधुरीणा स्वपतिं—स्वामिन्? या खलु पृथ्वीराजविजयाशाऽस्माकमासीत् सा च साम्प्रतं समूलमुच्छिन्ना. सम्प्रति नास्ति कोऽपि पृथ्वीराजेन समं युद्धार्हः. तच्छीघ्रमेव दूतं प्रेषयित्वा निर्वासितौ ‘अलह’ ‘उदल’ नामानौ सामन्तौ केनापि प्रकारेण प्र-

त्यानेयौ. तौ च यदि प्रत्यागमिष्यतस्तदाऽवश्यमस्मांस्तथेदं राज्यं कृत्स्नमपि रक्षिष्यतः. अन्यथाऽशक्यमेव राज्यरक्षणमिति जगाद.

राजा परमालस्तु मन्दधीरनन्यगतिकत्वेनेदं स्वपत्नीभाषणमंगीकृत्य पृथ्वीराजं मासद्वयपर्यन्तं युद्धशान्त्यर्थमयाचत. सोऽपि च जात्या क्षत्रियस्तस्य विज्ञप्तिमंगीकृत्य मासद्वयं तूष्णीमतिष्ठत्. अत्रान्तरे परमालराजः स्वाश्रितं चतुरं जनकनामानं बन्दिनं तयोः सामन्तयोरानयनाय कनोजाधिपस्य जयचन्दस्य समीपे प्रेषयामास. सोऽपि स्वामिभक्तस्तयोरान्तिकं गत्वा सखेदं—सामंतशिरोमणी! यदाप्रभृति राज्ञा दुर्जनवचनं श्रुत्वा युवां राज्यान्निसारितावित्यशृणोद्देवी तद्दिनमारभ्य रात्रिंदिवं नेत्रकमलाभ्यामश्रूणि विसृजति. तद्यदि युवां प्रत्यागत्य महोबानगरमलंकरिष्यथस्तदैव राज्ञी सन्तुष्टा भविष्यति' इत्यगदत्.

तावपि—अस्मत्पूर्वजैस्तथाऽस्माभिश्च ये खलु पराक्रमाः कृतास्तेषामिदं देशनिर्वासनरूपं पारितोषिकं राज्ञा परमालेन वितीर्णं. अस्माभिश्च तत्परमानन्देन गृहीतमिति सकोपं प्रत्युत्तरयामासतुः. चतुरो जनकोऽपि तयोः कोपं योग्यमेव मन्वानः पुनरपि चातुर्येण तयोः मनसी स्वानुकूले अकरोत्.

अथ तौ सामन्तबन्धू परमालराजस्य विज्ञप्तिं स्वमात्रे निवेदयामासतुः. साऽपि वीरमाता पश्चात्तापप्रदर्शकं राज्ञः पत्रमनुवाच्य संजातदयाभावा स्वपूर्वजैः सयत्नं रक्षितस्य परमालराज्यस्य

नाशमवलोक्य दुःखायमाना सत्वरं स्वपुत्रौ तस्य परमालस्य रक्ष-णार्थं गन्तुमादिदेश. तावपि मातुरनुमितिं गृहीत्वा सन्तुष्टौ नूतन-स्वामिनः कनोजाधिपस्य जयचन्दस्यानुमितिं ग्रहीतुं तत्समीपं जग्मतुः. स तु तौ वीरश्रेष्ठौ जिगमिषन्तौ वीक्ष्य स्वस्य महतीं हानिं मन्यमानो नानाविधैरुपायैस्तयोर्मनसी प्रत्यावर्तयितुं प्रायतत, परंतु तयोराग्रहं वीक्ष्य नानाविधानि उपायनानि ताभ्यां वितीर्य सत्कार्य च सादरं प्रेषयामास. तावपि परमसन्तोषेण कनोजा-धिपमभिनंद्य निर्गतौ महोबानगरमाययतुः.

महोबाधिपोऽपि तौ स्वापमानजन्यं दुःखं विस्मृत्य पुनरपि स्वसाहाय्यार्थमागतौ सामंतौ वीक्ष्य सन्तुष्टः सर्वैः समं प्रत्यु-ज्जगाम. राज्ञीं राजानं च प्रत्यागच्छन्तं वीक्ष्य स्वामिभक्तौ तौ सा-मन्तौ भूमाववतीर्य पद्भ्यां गत्वा तयोः चरणकमलयोः स्वशिरसी स्थापयामासतुः. राजाऽपि संतुष्टः सुमधुरैः कृतज्ञताबोधकैः स्वो पतापप्रदर्शकैर्वचनैरवशिष्टमपि अपमानशल्यं तद्धृदयाद्दूरीचकार. ततश्च ताभ्यां सह महोबानगरं प्रविश्य सर्वैरपि प्रजाजनैः सादरं संसेव्यमानः स परमालराजस्तौ 'अल्हउदल' नामानौ सामन्तौ परं समानन्दयत्.

अथ च तौ सामन्तौ लब्ध्वा संजातधैर्यो महोबाधिपः परमालराजः पृथ्वीराजाय युद्धसंदेशं प्रैषयत्. पृथ्वीराजोऽपि तं संदेशं निशम्य सन्तुष्टः स्वसेनां गृहीत्वा महोबानगरसमीपमाज-गाम. तं चागणितसैनिकसमन्वितं पृथ्वीराजं वीक्ष्य परमालराजो

भीतिविव्हलस्तेन सह संधातुं मनो व्यधात्. स्वस्वामिनं संधिविधान-मानसं समीक्ष्य तौ सामन्तबन्धू राजपुत्रो ब्रह्मजिच्च परं निषिषेध. राजाऽपि जनलज्जापरिहाराय कथमपि तत्रातिष्ठत्.

ततश्च भेरीपटहढक्कादिवाद्यघोषपुरःसरं तयोः पृथ्वीराजमहोबा-धिपयोर्घोरं युद्धं प्रावर्तत. पृथ्वीराजश्च स्वसेनाधिपत्ये स्वपितृव्यं नानायुद्धविजयशालिनं शूरं कन्हचव्हाणं स्थापयामास. अचिरादेव स वृद्धः कन्हो महोबाधिपस्य सेनां तथा सामन्तबन्धुद्वयेन समं समागतां कनोजाधिपसेनां सहसा आचक्राम. प्रावर्तत च घोरं समरं. तत्र नीलधररायो नाम पृथ्वीराजसामन्तः परमशूरः स्वप्रतिपक्षीयं तालखापठाणनामानं शत्रुसेनापतिं जघान. तस्मिन्निहते सर्वाऽपि शत्रुसेना सर्वतः पलायनपरा बभूव. स्वसेनां पलायनोन्मुखीमालोच्य क्रोधान्धो 'लाखनसी'नाम महान् शूरो महोबाधिपसामन्तः सर्वानपि सैनिकान् प्रोत्साहयन् अग्रेसरो भूत्वाऽयुध्यत. परमचातुर्येण युध्य-मानं तं लाखनसीसामन्तं गदाप्रहारेण पृथ्वीराजपक्षीयः कश्चन साम-न्तश्चूर्णितोत्तमांगमकरोत्. भीष्मइव महाप्रतापी कन्हचव्हाण एकाकी शत्रुपक्षीयैस्त्रिभिः शूरैः सामन्तैः समं युध्यमानस्तान् सर्वानपि स्वर्गम् गमयामास. तदानीं तौ सामन्तबन्धू प्रायः स्वपक्षीयान् समरभूमि-पतितान् वीक्ष्य संतप्तौ कुंकुमाक्तवस्त्राणि धृत्वा महताऽनन्देन समर-मवतेरतुः. तौ च समरांगणं प्रविश्य महाप्रतापिनं पृथ्वीराजपक्षीयं संजमरायनामानं सामन्तमाक्रम्यावधिष्टाम्. ततश्च उदलनामा सामन्तः कन्हचव्हाणमाक्रम्य घोरं युद्धं प्रावर्तयत्. उदलसामन्ते स्वगदया कन्हचव्हाणशिरसि प्रहारं कुर्वति सति तं प्रहारं दैवादागतः कयमाषा-

मात्यो विफलीचकार. स्वप्रहारं विफलीभूतं प्रेक्ष्य क्रुद्धः स उदल-सामन्तस्तयैव गदया कयमाषामात्यं प्राहरत्. तदानीमेव सोऽमात्यो मूर्च्छितो धरणीतलेऽपतत्. कयमाषामात्यं मूर्छितमालोक्य पृथ्वीराज-पक्षीयो नन्हपडियारनामा सामन्त उदलसामन्तेन सममयुध्यत. तदानीमेव प्रकृतिमापन्नौ कन्हचव्हाणकयमाषामात्यौ तस्य साहाय्यार्थ-मागच्छताम्. ते सर्वेऽपि संघीभूय शूरस्य 'उदल'सामन्तस्य मस्तकं चिच्छिदुः. सोऽपि वीरो यथाशक्ति विहितस्वामिकार्यो वीरलोकं जगाम.

अथ स्वबन्धोः शिरश्छेदं निशम्य क्रोधान्धः प्रियबन्धुः अह्लः सर्वानपि पृथ्वीराजपक्षीयान् मोहनास्त्रेणामोहयत्. मोहनिद्रा-व्याकुलांस्तान् स्वसैनिकान् वीक्ष्य पृथ्वीराजश्चिन्तातुरश्चन्दबन्दिनं कर्तव्यमपृच्छत्. सोऽपि कृत्स्नमस्यास्त्रस्य प्रभावं कथयित्वा तत्परिहा-हारोपायं शंकरगणं आततार्इनामकं प्रार्थयामास. स च गणः प्रकटीभूय घोरैः सिंहनादैर्मूर्छितान् सर्वानपि पृथ्वीराजसैनिकानजा-गरयत्. क्रुद्धश्चाल्हस्तेन शंकरगणेन समं युयुधे. तौ द्वावपि परस्परप्रहारहतौ मुमूर्च्छतुः. अत्रान्तरे पृथ्वीराजो महता प्रयत्नेन कुमारं ब्रम्हजितं स्वर्गातिथिं चक्रे. अह्लश्च पुनरपि प्रकृतिमापन्नो योध्दुमारभत. तदानीं रामगुरुपुरोहितश्चन्दबन्दी च युयुधाते. अह्लश्च स्वगुरुं गोरखनाथं ध्यात्वा तदभिप्रायं पप्रच्छ. सोऽपि स्वयं प्रकटीभूय एतावत्पर्यन्तं त्वया क्षत्रियोचितं कर्म कृतं. परन्तु ब्राम्हणबन्दिभ्यां सह युध्वा विजयो लब्धुमशक्य इति विरम साम्प्रतमस्माद्व्यापारात्.

आगच्छ मया सह तीर्थानि सेवितुमित्यवदत्. तस्येदं भाषणं निशम्य शस्त्रं निक्षिप्य वीरोऽल्हो वनान्तरं जगाम.

राजा परमालश्च प्रथमतएव योध्दुमनिच्छन् कथमपि ताभ्यां सामन्तबन्धुभ्यां समरांगणमानीतस्तयोर्दुरवस्थां वीक्ष्य पलायितः कलिंजरनाम्नि महादुर्गे निभृतमतिष्ठत्.

( ५ )

अथ धृतवैराग्येऽल्हसामन्ते स्वगुरुणा समं वनं प्रति गते सति सर्वेप्यवशिष्टा अन्ये महोबाधिपपक्षीयाः सैनिकाः सामन्ताश्च शरणमाजग्मुः. तान् शरणागतान् वीक्ष्य वृथा रक्तपातं परिहरन् पृथ्वीराजसेनापतिः स्वसैनिकानपि युद्धव्यापारान्निवर्तयामास. ते सर्वेऽपि विस्मृतवैरभावाः स्वस्वपक्षीयान् बान्धवानन्वेषयामासुः. पृथ्वीराजसामन्तास्तु स्वस्वामिनमनभिलक्ष्य चिन्तातुरा महता प्रयत्नेन शोधयन्तस्तं शस्त्राघातविव्हलं विविधशस्त्राघातक्षतशरीरसैनिकसमुदाय-पतितं रुधिरस्रावहीनशक्तिकमलभन्त. स्वामिनः पृथ्वीराजस्येदृशीं दशामवलोक्य शोकव्याकुलाः सत्वरं तमुपचारैः प्रकृतिमापयितुं प्रायतन्त. अलभन्त च तत्र शीघ्रमेव यशः. चामुण्डरायोऽपि कलिंजरदुर्गं जित्वा परमालराजं बन्दीकृत्यानयत्. तस्माच्च दुर्गा-दगणितं द्रव्यराशिं.

ततश्च महोबानगरं महतोत्सवेन प्रविश्य राजा पृथ्वीराजो दुष्टानां शासनार्थं तथा कृतपरिश्रमाणां सेवकानामनुग्रहार्थं महतीं

राजसभां चकार. तत्र चोच्चं सिंहासनमासीनः सर्वान् सभ्यानुद्दिश्येदमभाषत.

भो भो सभ्याः सामन्ताः शूराः सैनिकाः ! वयं चेशकृपयाऽस्मिन् महायुद्धे विजयश्रिया समलंकृताः. ये खलु राजानः स्वनिर्विशेषं स्वानुयायिषु वर्तन्ते तेऽवश्यमेव यस्मिन् कस्मिन्नपि कार्ये यशस्विनो भवन्त्येव. योहि राजा स्वसुतनिर्विशेषं स्वाश्रितान् पालयति तस्मिंस्तेऽपि निर्विशेषं प्रेम कुर्वन्ति. अहं चास्मिन् युद्धे ब्रम्हजिता राजकुमारेण समं युयुधे. तत्र मदीयप्रहारेण पराक्रमी राजपुत्रः स्वर्गमलभत. तदीयप्रहारेणाहं मूर्च्छां. मूर्च्छितश्च मृतसैनिकसमुदायेऽपतम्. अत्रान्तरे महानेकोगृध्रो मां मृतं मन्यमानो मांसलोलुपो मदक्षिणी विदारयतुमचेष्टत. तं भयानकं गृध्रं वीक्ष्य प्रतिकारासमर्थः केवलमहमीश्वरमेव प्रार्थयम्. अत्रान्तरे मम समीप एव पतितः सामन्तः संजमरायः शस्त्राघातव्याकुलस्तस्माद्गृध्रान्ममानिष्टं शंकमानः स्वदेहमांसखण्डं छुरिकया निकृत्य तस्य गृध्रस्य पुरस्ताच्चिक्षेप. सोऽपि अनायासप्राप्तं तं खण्डं गृहीत्वा कृतकृत्यो ऽन्यत्र ययौ. संजमरायश्च स्वार्जितान् पुण्यलोकान्. सभ्याः ? अहं यावज्जीवं तस्य पुण्यश्लोकस्य संजमरायस्येदं कर्म न विस्मरामि, प्रत्युत तं प्राणदातारं देववत् पूजयामि. अस्तु. अयं च महोबाधिपः परमशूरो स्वाश्रितौ अलहउदलनामानौ सामन्तौ निर्वास्य युद्धसमये महतीमापदं लेभे. योहि राजा कार्याकार्ये न विजानाति तस्य सेवका अपि परमुदासीना न सम्यक् कार्याणि कुर्वन्ति. तदस्मिन् राज्येऽय-

मनधिकारी. तदेनं निष्कास्य परमचतुरं शौर्यादिगुणसमन्वितं मदीयं सामन्तं पंजूनकच्छवाहं स्थापयामि. स च न्यायेन प्रजाः पालयत्विति. इदं च पृथ्वीराजस्य भाषणं निशम्य परमालश्च दुःखाकुलोऽभूत्. सर्वे च प्रजाजनास्तादृशदुष्टराजत्रासान्मुक्ताः पृथ्वीराजमस्तुवन्. तदानीमेव शुश्रूषया स्वसामन्तानक्षतान्विधाय समागतं रामगुरुपुरोहितं पृथ्वीराजः प्रणनाम.

ततश्च महोबानगरे कतिपयान्दिवसान् यापयित्वा महतोत्सवेन दिल्लीनगरं प्रति प्रातिष्ठत. प्रविश्य च तत्प्रजाजनैरभिनंद्यमानः परं सुखमलभत महाराजः पृथ्वीराजः.

# पञ्चमोगुच्छः ।

१. कनोजाधिपस्य राजसूययज्ञविधानेच्छा.

२. पृथ्वीराजस्य तत्र प्रातिकूल्यम्.

३. युद्धं. कनोजाधिपस्य पराभवः.

४. कनोजाधिपकन्यायाः संयोगितायाः पृथ्वी-
राजेऽनुरागः.

५. कनोजाधिपस्य तस्यामप्रीतिः प्रतिबन्धश्च.

[ १ ]

एवं सर्वत्र विजयशालिनि चव्हाणवंशसागरचन्द्रे पृथ्वीराजे न्यायेन स्वप्रजाः पालयति सति तत्सदृश एवापरो राठोडवंशभूषणं पराक्रमशाली, अगणित-सेनाभारसमन्वितः, सकलसामन्तमण्डलवन्दितः, राजा जयचन्दो नाम कनोजनगरे राज्यमकरोत्. स च जयचन्दः पृथ्वीराजमपेक्ष्य बलाढ्यः संपन्नश्चासीत्. तस्य भागीरथीपरिवेष्ठिता सुसंपन्ननागरिकसमलंकृता, विविधशिल्पकार्यचतुरैः शिल्पिभिर्निर्मिते

सौधसंघैर्विभूषिता पंचदशक्रोशायामा कनोजनाम्नी सुविख्याता नगरी राजधान्यासीत्. तस्यां च वसन् स जयचन्द आत्मानं स्वर्गाधिपादपि श्रेष्ठममन्यत. तस्य मंत्रिमण्डलमपि राज्यकर्माणि कुशलं स्वमतिप्रभावेण बृहस्पतिमपि समतिचक्राम. कोशाश्च सततमागतैः प्रजाकरद्रव्यैः, सामन्तप्रदत्तैरुपायनैः, परिपूर्णा एवासन्. सेना च युद्धकुशलैः सेनापतिभिः सुशिक्षिता सर्वशस्त्रास्त्रशालिनी संख्ययाऽशीतिलक्षपरिमिताऽसीत्. यदा च स कनोजाधिपो राजसभायां सिंहासनमलमकरोत्तदा समस्ततारागणमण्डितस्य चन्द्रस्य शोभामपहरति स्म.

एवं प्रतापी स कनोजाधिपो जयचन्दः प्रवर्धमानां शुक्लपक्षज्योत्स्नासहचरीं दिल्लीपतेः पृथ्वीराजस्य कीर्तिं निशम्य संजातद्वेषस्तदपमानमतिः किमपि कारणमचिन्तयत्.

अत्रान्तरे मध्यान्हसमये पुराणकथनार्थं विद्वान् पौराणिकः समाययौ. राजाऽपि नित्यक्रमानुरोधेन पुराणं श्रोतुमतिष्ठत्. तस्मिन्दिने स पौराणिको महाभारतान्तर्गतं राजसूययज्ञप्रकरणं सम्यगकथयत्. तत्र च नानाविधदेशाधिपैर्विहितानि सेवाकर्माणि निशम्य राजा परमतुष्यत्. रात्रौ च स्वामात्यं सुमतिनामानमाहूय जयचन्दोऽवदत्-मंत्रिवर ! दिल्लीपतिः पृथ्वीराजो नानाविधान् देशान्विजित्यापारं यशो लब्ध्वाऽस्मान् न्यूनीकर्तुमिच्छति. तत्केन प्रसंगेन स आक्रम्य पराजित्य स्वसामन्ततां प्रापणीय इति चिन्तामग्नोऽहं मध्यान्हे राजसूययज्ञविधानमश्रौषम्. तदहं राजसूययज्ञं विधास्यामि. तत्र

चेतरराजवत्सेवार्थमाहूतः पृथ्वीराजो यदि नागच्छेत्तदाऽस्माभिः सहसाऽक्रम्य स सुजेयो भविष्यति. तदत्र किं भवतोऽनुमतमिति. स च मंत्री स्वस्वामिनो राजसूययज्ञविधानेच्छां निशम्य परं विस्मितः—स्वामिन्! अस्मिन् कलियुगे नास्ति कस्यापि राज्ञो राजसूयविधानाधिकारः. स तु यागराजो धर्मराजप्रभृतिभिः प्राचीनै राजर्षिभिरेव कर्तव्यः. नास्मादृशैर्लोभसंकुलैर्मानवाधमैः! तद्विहाय राजसूययागविधानेच्छां पृथ्वीराजाक्रमणे वयमन्यत्कारणमन्वेषयिष्याम इत्यगादीत्.

जयचन्दस्तु महामानी स्वमंत्रिण इदं प्रतीपं भाषणं निशम्य क्रुद्धस्तं प्रत्यगदत्—रे मंत्रिमूढ! नास्ति कस्यापि क्षत्रियराजस्य कलियुगे राजसूयाधिकार इति वदता त्वया कथमिदं कलियुगं ज्ञातं? अस्ति किं मदीये राज्ये कलियुगस्य लक्षणं किंचित्? अहं च द्वितीयो धर्मराज इव न्यायेन सर्वान् पालयामि. सर्वाः प्रजा अपि स्वस्वधर्माचरणं चरन्त्यो धर्मेणैव वर्तन्ते. सर्वेऽपि प्रजाजनाः स्वस्वविहितोद्यमान्विधाय पर्याप्तं लौकिकं सुखं भुंजते. समस्तभारतवर्षवासिनो भूपालाः मदीयां सामन्ततां लब्ध्वा धन्यंमन्याः शत्रुभीतिलेशेनाऽपि विहीनाः सुखमासते. तत्कथय साम्प्रतं किमपि कलियुगस्य चिन्हमस्ति वेति?

स्वस्वामिन इदं गर्वोष्टब्धं भाषणं निशम्य खिन्नः स सुमतिर्मंत्री पुनरपि शनैर्जगाद. स्वामिन्! सत्यमेव यूयं सम्यक् न्यायेन प्रजाः पालयथ. परंतु समग्रभारतवर्षे ये खलु राजानः सन्ति ते न धर्मेणैव प्रचरान्ति. रात्रिंदिवं परद्रव्यपरकान्तापहारमिच्छन्तः प्रायः

साधारणाअपि जना दृश्यन्ते किमुत सेनाबलसमन्विता राजानः! पूर्वं तु मनसैव पापविमुखाः सदाचरणपरा जना आसन्, अधुना राजदण्डभयेन क्वचित्तथा वर्तमानाअपि मनसा पापाचरणोत्सुका एव. पूर्वं परमेश्वरभिया परराज्यानि नाक्राम्यन् भूपालाः, अधुना तु पराभवभीत्या. तदस्मिन् स्पष्टतरे कलियुगचिन्हे परिदृश्यमाने सत्यपि यदि स्वामीदं सत्ययुगमेव मन्यते तदा केवलमिदं वाक्यं राजाज्ञेत्येवास्माभिः स्वीकर्तव्यमिति.

कनोजाधिपो जयचन्दस्तस्य सुमतेर्भाषणं सत्यमिति मन्वानोऽपि मानधनतयाऽहं राजसूययज्ञं करिष्याम्येवेति प्रतिज्ञाय सर्वान् स्वराज्ये तथाऽघोषयत्. मंत्र्यपि स्वामिभक्तो राजाज्ञापालनं स्वकर्तव्यं मन्वानः स्वाधिकारकार्यमकरोत्.

अचिरादेव राजा जयचंदः सर्वान् भारतवासिनो भूपालानुद्दिश्येदं प्रसिद्धिपत्रं निरकासयत्.

सर्वे भारतवासिनो भूपालाः! कनोजाधिपतिर्जयचन्दोऽहं राजसूययागविधानेच्छुरस्मि. तदस्मिन् यागे नियुक्तानि स्वस्वकर्माणि विधातुं सर्वैरपि युष्माभिरत्रोपस्थातव्यं. ये खलु बलमदाद्वोन्मादाद्वा नोपस्थास्यन्ति तानहमचिरादेव प्राणदण्डेन वा राज्यहरणदण्डेन वा, देशनिर्वासनदण्डेन वा, येन केनापि क्रूरेण दण्डेन योजयिष्यामीति. तदिदं प्रसिद्धिपत्रं दूतद्वारा समागतं वीक्ष्य सर्वेऽपि भारतभूपालाः कनोजाधिपस्य सामर्थ्यं जानन्तः सत्वरमेव ससैन्यं कनोजनगरमागत्य

जयचन्दस्य चरणारविन्दं प्रणेमुः. तदानीं जयचन्दस्य राजधानी कनोजनगरं द्वितीयं भूतलमिवाशोभत. राजापि सकलसामन्तमंडलमध्यवर्ती नक्षत्रगणपरिवेष्टितः पूर्णिमाशशांक इव.

अथ सर्वां राजसूययागसामग्रीं परिपूर्णामवलोक्य तत्प्रारंभं चिकीर्षुर्नृपो जयचन्दः केवलं दिल्लीपतिं पृथ्वीराजं तथा चितोडाधिपं समरसिंहमनागतं वीक्ष्य कोपाकुलः पुनरपि पृथ्वीराजाय दूतद्वारा संदेशं प्रैषयत्. स चेत्थम्.—

दिल्लीपते! पृथ्वीराज! अस्माभिरत्र राजसूययागः समारब्धस्तदर्थं निमंत्रणमपि पूर्वमेव प्रेषितं. तदनादृत्य नागतो भवान्. तत्पुनरपि त्वां कथयामि यदि तुभ्यं स्वीयाः प्राणाः प्रियाः स्युः, यदि वा राज्यमपि; तदा सत्वरमागत्येतरसामन्तवदहं सेवनीयः. त्वदर्थं चास्माभिर्द्वारपालकर्म निर्णीतमस्ति. इति.

तं च दूतेनानीतं संदेशं निशम्य क्रोधसंतप्तसर्वांगः पृथ्वीराजः सर्वानपि स्वसामन्तानेकत्रीकृत्य तस्य जयचंदस्य शासनार्थं मंत्रयामास.

( २ )

ततः सर्वैः कुशलैर्मंत्रिभिश्च समं संमंत्र्य पृथ्वीराजो जयचन्दाय-कनोजाधिप! जयचन्द! त्वं बलमदोन्मत्तो राजसूययज्ञरूपं दुष्करं कर्म कर्तुं वाञ्छसि. परन्तु राजसूयविधानेऽयोग्यतामात्मनो न विभावयसि. पुरा खलु सत्ययुगे बलिराजेनायं यागः कृतस्तदा

साक्षान्नारायणाय कृत्स्नेयं भूः प्रदत्ता. त्रेतायुगे रामचन्द्रेणायं यागः कृतस्तत्र साक्षात्कुबेरएव तत्साहाय्यार्थमागतः. द्वापरयुगे युधिष्ठिरेणायं यागः कृतस्तत्र साक्षाद्देवकीनन्दनः सहाय आसीत्, अलब्ध्वा चेदृशं साहाय्यं अकृत्वा च पौरुषकर्माणि अजित्वा च समग्रां पृथ्वीं केवलमहं राजसूययागं करोमीति कथनं नाम बालिशभाषितं. वस्तुतस्त्वस्मिन् समग्रभारतवर्षे यदि कश्चन राजसूययागविधानेऽधिकार्यस्ति चेत् सोऽहमेव. मया खलु परमक्रूरो महंमदीयधर्मानुसारी गिझनीपतिः शहाबुद्दीनःत्रिः पराजितः. बलोन्मत्तो विख्यातो भीमदेवो नाम गुर्जराधिपतिरपि जित्वा राज्यान्निर्वासितः. दुराचारी महोबाधिपः परमालोऽपि मया लीलयैव शासितः. सर्वेऽपि स्वल्पबला भूपा बलिभिरन्यैः नृपैराक्रान्ता मत्त एव साहाय्यं याचन्ते. सकलवन्दिजनमुखकमलसंचारिणीं चंद्रपुण्डरीकसहचारिणीं मदीयां कीर्तिं निशम्य न केवलं दुर्वृत्तनृपप्रजा एव मां स्वाधिपं विधातुं कामयन्ते किंतु विविधभूपालकन्यका अपि. तदेवं सकलगुणमण्डितोऽप्यहमात्मानं राजसूययागाधिकारिणं न भावये तदा त्वादृशान् क्षुद्रान् जन्तून् कथं भावयिष्य इति त्वमेव विचारय. तद्यदीदृशमपमानकारकं संदेशं पुनरपि प्रेषयिष्यसि तदाऽयं शत्रुकण्ठनालविदारणलब्धख्यातिः पृथ्वीराजहस्तकमलविराजमानः खड्गो न मर्षिष्यतीति जानीहि इति प्रत्युत्तरं प्रेषयामास.

मानवतामग्रेसरो जयचन्दो दूतसमानीतं तत्प्रत्युत्तरं समाकर्ण्य क्रोधसंतप्तो रक्ततरनयनयुगलस्तस्मिन्नेव क्षणे सर्वानुद्दिश्येदं जगाद-

"समुपस्थितेषु भूपालेषु यः कोऽपि मां सेवितुमिच्छति चेत् स प्रथमं पृथ्वीराजं बन्दीकृत्यात्रानयतु. अहं च तं सर्वथा साहाय्ययिष्यामीति."

अनवसित एवास्मिन् जयचन्दवाक्ये तदीयः कनीयान् बन्धुर्वालुकरायः सत्वरमुत्थाय राजसिंहासनं नमस्कृत्य-अहं हि तं मदोन्मत्तं पृथ्वीराजं पराजित्य बन्दीकृत्यात्रानेष्यामि-इति प्रतिजज्ञे. जयचन्दोऽपि स्वभ्रातुर्वालुकरायस्येदं भाषणं निशम्य सन्तुष्टस्तत्साहाय्यार्थं खुशानखानवंदातमीरनामानौ द्वौ सामन्तौ षष्टिसहस्रपरिमितां सेनां च दत्वा स्वकार्यविधानाय प्रेषयामास. तावत्पर्यन्तं राजसूययागद्वारे पृथ्वीराजस्य सुवर्णमयीं प्रतिमां स्थापयित्वा पृथ्वीराजो द्वारपालः कृतः. बालुकरायोऽपि स्वकार्यं शीघ्रं विधातुं त्वरमाणो राजसूययागे विघ्नविधानार्थं समागमिष्यतः पृथ्वीराजस्य पराजयाय मार्गे खोकंदनगरसमीपे क्लृप्तस्कंधावारोऽवसत्. दिल्लीपतिः पृथ्वीराजः. सर्वतः प्रसृतचारमुखेन यागद्वारे स्थापितां स्वप्रतिमां तथा स्वशासनार्थं प्रेषितं वालुकरायं च निशम्य क्रुद्धः सत्वरमेव कृत्स्नं सामन्तमण्डलं च मंत्रिमण्डलं चाहूय किंकर्तव्यमिति विचारयामास. तत्र केचनावदन्' नास्ति संप्रति विचारस्यावसरः. सत्वरं गत्वा स मत्तो जयचन्द आक्रम्य पराजेय इति.

अन्येतु-अशक्यमिदं जयचन्दाक्रमणं. यतः स स्वीयां महतीं सेनां पालयन् नूतनागतानां विविधभूपालानां सैन्यान्यपि बिभर्ति. तत्कथ-

मेकाकिना स्वामिना स आक्रमणार्हः? तस्मादन्यया कयापि युक्त्या तस्य राजसूययज्ञे विघ्नः कर्तव्य इत्यगदन्.

पृथ्वीराजस्य परमचतुरः कुशाग्रमतिरमात्यः कयमाषोऽब्रवीत्-स्वामिन्! यत्खलु क्षत्रियकुलोत्पन्नैरुक्तं तत्करणीयमेवेति नः पूर्वजैराचरितो धर्मः, परन्तु केवल पतंगवत् प्रज्वाले वन्हौ निपत्य मरणमपि न श्रेयः. तदधुनाऽस्मत्स्वामिशासनाय समागतो जयचन्दबन्धुरेवाक्रम्य हन्तव्यः. तस्मिन्निहते राजसूययज्ञोऽपि प्रतिबद्धो भविष्यति, तत ऊर्ध्वं जयचन्दः स्वयमेव योध्दुमागमिष्यति चेत्तदा वयमपि द्रक्ष्याम इति
दिल्लीपतिः पृथ्वीराजः सर्वं मंत्रिमण्डलं च तस्य कयमाषप्रधानस्य भाषणमाकर्ण्य तथैव कर्तुं निर्णयौ.

( ३ )

अथ पृथ्वीराजः सर्वान् स्वसामन्तानाहूय सर्वां सेनां सन्नाहयामास. तदाधिपत्ये च स्वपितृव्यं कन्हचव्हाणं नियुज्य महता सावधानेन वालुकरायाक्रमणार्थं चचाल. सा च सेना सप्ततिसहस्रपरिमिता शनैः शनैर्दिल्लीनगरान्निर्ययौ. तदानीं च सर्वेऽपि सज्जना ईश्वरं विजयार्थं प्रार्थयन्त. तेषामाशीर्वादान् गृहीत्वा कन्हचव्हाणो महतोत्साहेन खोकंदनगरमनुलक्ष्य चचाल.

वालुकरायोऽपि ज्ञातवृत्तान्तः स्वसेनां गृहीत्वा पृथ्वीराजेन समं

योध्दुं पुरत आययौ. अचिरादेव तौ सेनासमूहौ परस्परं वीक्ष्य महाप्रलयवातप्रचालितौ समुद्राविव क्षुब्धौ परस्परमाक्रम्य महता क्रोधेनायुध्येताम्. पदातिविभागश्च स्वशत्रुपक्षीयान् पदातीनाक्रम्य निष्कोषीकृतैः खड्गैस्तेषां कण्ठान् फलानीव लुलाव. भल्लक्षेपनिष्णातः सादिविभागोऽपि स्वहस्तलाघवं प्रदर्शयन् स्वप्रतिपक्षीयाणामुदराणि विदार्य मांसपेशीराविश्चक्रे. कुंजराश्च रणमदोन्मताः प्रतिपक्षवीराणां मस्तकानि कपित्थफलानीव चूर्णयामासुः. तदिदं युध्दं प्रवहद्रुधिरशोणितनदीकं सर्वतः पतितांगविकलसैनिककलेवराच्छादितं भयंकरमभूत्.

अथ वालुकरायः स्वसैन्यं पृथ्वीराजसेन्येनाक्रान्तं प्रतिनिवर्तमानं वीक्ष्य क्रुद्धः स्वयमेवाग्रेसरो भूत्वा निष्कोषीकृतखड्गः सेनापतिं कन्हचव्हाणमेवाचक्राम. कनोजसेनाऽपि स्वस्वामिन इदं धैर्यं प्रेक्ष्य सानन्दा पुनरपि महता जवेन पृथ्वीराजसेनामक्रमीत्. वालुकरायश्च महता सावधानेन कन्हचव्हाणस्यापरि खड्गाघातमकरोत्. परमवीरः कन्हचव्हाणोऽपि तस्य वालुकरायस्य तीक्ष्णं खडगप्रहारं स्वचर्मफलके गृहीत्वा तीक्ष्णाग्रं भल्लं तथा चिक्षेप यथा स भल्लः क्षणादेव बालुकरायस्य कण्ठदेशं निर्भिद्य कतिपयशूराणां शिरांसि चिच्छेद. वालुकरायश्च तस्मिन्नेव क्षणे विजीवो भूत्वा समरभूमौ निपपात. तं स्वसेनापतिं समरपतितं वीक्ष्य सर्वमवशिष्टं कनोजाधिपसैन्यं गलितधैर्यं सर्वतः पलायतेस्म. कन्हचव्हाणस्तु विजयीभूत्वा महतानंदेन दिल्लीनगरमाययौ.

कनोजाधिपो जयचन्दश्च भ्रातृवधदुःखाकुलः संप्राप्तमरणाशौचः कथमपि राजसूययज्ञं कर्तुं न पारयामास. तथा तदनुषंगिस्वकन्यायाः संयोगितायाः स्वयंवरं च.

(४)

वाचकाः! कनोजाधिपस्य कन्यायाः संयोगितायाः परिचयार्थं प्रथमतस्तद्वृत्तं लिखामि.

पुरा खलु हिमालये कश्चन् तपस्वी घोरं तपश्चचार. तदानीं तत्तपस्याभीतैर्देवैः काचन् देवांगना तत्तपस्यायां विघ्नविधानार्थं प्रेषिता. सा च स्वनियोगमनुतिष्ठन्ती तेन क्रुद्धेन मुनिवरेण-त्वं हि मर्त्यलोके कनोजाधिपस्य जयचन्दस्य कन्या भूत्वा विवाहसमये उभयकुलघातं करिष्यसि ' इति शप्ता. साऽपि देवांगना स्वभाग्यं निन्दन्ती कनोजाधिपगृहे प्रादुर्बभूव. कनोजाधिपो जयचन्दोऽपुत्रस्तां सर्वांगसुन्दरीं कन्यां लब्ध्वा कृतकृत्यं मन्यमानः पुत्रवत् पालयामास. साऽपि चंद्रकलेव वर्धमाना प्रतिदिनमधिकमेव लावण्यं वहन्ती पित्रोरनल्पमानन्दमजनयत्.

अथ संप्राप्तयौवनां दिव्यलावण्यखनिं स्वकन्यां संयोगितां प्रेक्ष्य जयचन्दस्तदनुरूपं वरमन्वैषयत्. समग्रभारतवर्षे ये खलु राजपुत्रास्तदानीमासंस्तेष्वेकोऽपि तस्याः कन्याया वरणयोग्यतां नाबिभः. सर्वे

च राजपुत्रास्तां मूर्तिमतीं रतिमिव मन्यमानास्तत्संप्राप्तये प्रायतन्त. जयचन्दोऽपि तदनुरूपं वरमलब्ध्वा खिन्नः कथमपि कहरकण्ठीरनाम्ने राजपुत्राय तां दातुं निरचिनोत्.

संयोगिता तु प्रतिदिनं सकलमुखसंचारिणीं सकलसज्जनलोकसुखदायिनीं गंगासलिलपावनीं हिमालयहिमानीविमलां पृथ्वीराजस्य कीर्तिं श्रावं श्रावं तस्मिन्निभृतं बद्धप्रेमभावा तं पित्रा योजितं तरुणं राजपुत्रं स्वपतित्वेन निषिषेध. स तु जयचन्दः स्वकन्याया अभिलषितं जिज्ञासुः पुनः पुनः परमलावण्यसंपन्नान् राजपुत्रान् पतित्वेन वरणार्थं स्वकन्यामपृच्छत्. परन्तु सा दृढनिश्चया संयोगिता नैकमपि राजपुत्रं स्वपतिमकरोत्. राजा जयचन्दश्च स्वकन्याया ईदृशं वृत्तमवलोक्य विस्मितः तन्मनोगतं ज्ञातुमिच्छुः समवयस्कां चतुरां दासीमस्मिन् कर्मणि न्ययुंक्त.

सा च दासी निभृतं देवीं संयोगितां सेवमानाऽचिरादेव तस्या द्वितीयं हृदयपात्रमासीत्. संयोगिता च सर्वास्वपि दासीषु तामेव दासीं स्वसखीं मन्वाना सविशेषं स्वमनोगतमकथयत्. साऽपि तस्या गूढाशयं ज्ञातुकामा सादरं तां परिचचार.

एकदा-अभिनवपल्लवमण्डितेषु, निर्निद्रचूतांकुरविगलन्मकरंदपाननिपतद्भ्रमरावलिझंकारमनोहरेषु, कलकंठकूजितमनोरमेषु सहकारतरुषु, अतिगाढप्रहारिमदनधानुष्कबाणप्रहारनिर्गतैः पिशितैरिव लोहितैः शुकचंचुवक्रैः पुष्पैः समलंकृतेषु पलाशवृक्षेपु, विवाहार्थं

समुद्यतासु तरुणीष्विव परमसुन्दरमौक्तिकमालाभिरिव अविरलकोरकावलिभिःसमाच्छादितासु माधवीलतासु, कामातुरमृगेण शृंगेणापनीतकण्डुषु सुविश्रब्धं स्थितासु मृगीषु; विविधपरिमलवहनपरिश्रमादिव मन्दमन्दवाहिना मलयानिलेन कम्पितासु तरुणीष्विव विविधलतासु, स्फटिकविमलजलपरिपूर्णतडागक्रीडाश्रान्तेषु सुप्तेषु हंसमिथुनेषु, चंपककुसुमपरिमलसामोदासु दशसु दिशासु सतीषु सा दासी वसन्तोत्सवं निमित्तीकृत्य तां संयोगितां परमसुन्दरे राजोपवने क्रीडितुं गृहीत्वाऽगच्छत्. सापि तत्र गत्वा सहकारं जातीलतया कोमलपल्लवांगुलिभिः करशाखाभिः समाश्लिष्टं कोकिलकूजितमनोहरं; विकचकुसुमसौरभहृदयहारिणं, भ्रमरावलिश्यामलं, रतिविवाहमण्डपमिव, माधवीमण्डपं; प्रफुल्लकमलकोरकविगलत्परागधूसरं, असंख्यकुसुमितलतानिवारितातपं, क्रीडद्धंसमिथुनप्रणयकलहसमुत्पन्नतरंगकभासुरं, रतिमन्मथस्नानस्थानमिव स्फटिकोपनिबद्धं तडागं; निसर्गनिर्मितासु लतादोलासु स्थित्वा क्रीडन्ति प्रणयिमिथुनानि पश्यन्ती चकितेव मुषितेव सभयं सर्वत्र मृगलोचनलावण्यहारिणी चटुले नयने प्रेषयन्ती कथमपि क्षणमात्रमतिष्ठत्. अचिरादेव च तां स्वकांतापेक्षया समधिकलावण्यां प्रेक्ष्य द्वेषादिव वा, स्वापेक्षयाऽधिकसुन्दरे पृथ्वीराजे भावबन्धनाद्वा क्रुद्धो मनोभूरविरतं सुतीक्ष्णैः पंचभिः शरैरपि ताडयामास. सा च क्षत्रियकन्यकाऽपि असहायैकाकिनी तेन समं योध्दुमशक्नुवन्ती शीघ्रमेव जर्जरितांगी मुमूर्च्छ. सखीगणश्च राजकोपभीतः सत्वरं तां तन्निवासमन्दिरमानीय शीतलोपचारैः सिषिचे.

अथ प्रकृतिमापन्नां तां संयोगितां सा दासी रहस्यवोचत्- सखि! कथय मां किन्निमित्तमियं तेऽवस्था संवृत्ता. किं पित्तप्रकोपो वा संवृत्तोऽथवा पिशाचबाधा वेति न जानामि. वयं च निसर्गत एव मूढा वाचा कथितमपि न जानीमहे किमुत चेष्टितनिवेदितं. तत्कथय सखि! किमर्थमित्थं त्वं संतप्यसि. अहं च यथाशक्ति त्वदभिलषित- पूर्त्यै यावज्जीवं प्रयतिष्य इति.

इदं च करुणामयं सखीवचनं निशम्य सकरुणं विलपन्ती सा संयोगिता सगद्गदं-सखि! अहमस्मि परमभाग्या. अहं च यदि कस्य- चित्साधारणस्य मानवस्य कन्याऽभविष्यं तदा स्वाभिलषितं लब्ध्वा सानन्दा कृतार्था चाभविष्यम्. हले! किं कथयामि. दुर्लभो मे मनोरथः. केवलं तं निशम्य त्वमप्यहमिव दुःखाकुला भविष्यसि. तद्विरम त्वमस्माद्व्यापारात्. अहमेव पूर्वजन्मसंचितं पापफलं भुंजे- इति वदन्ती मुक्तकण्ठमरोदीत्

सा च दासी तावतैवातृप्ता पुनरपि शनैः सदयमवोचत्. तेन च जातविश्रंभा सा संयोगिता विरहदुःखं सोढुमशक्नुवन्ती कथंकथ- मपि लज्जया स्वमनोवासिनं दिल्लीपतिं पृथ्वीराजमदर्शयत्. अगदच्च- सखि! यद्यप्यहं नास्मि योग्या तादृशस्य पृथिवीन्द्रस्य पत्नीत्वे, तथापि यथा मूर्खो बाल आकाशगतं चन्द्रमपि वांच्छति तथैव मामपि जानीहि. हले! नास्ति मनोरथानामगतिः, परन्तु केवलं मनो- रथैनैव कार्याणि न सिध्यन्ति. असाध्यश्च मनोरथः प्राणिनं परं

दुःखाकरोति. विशेषतस्तु मनोभूः. एष च संकल्पजन्मा सहकारसंपादितयुद्धसाधनो वसन्ते मत्त इव मां प्रहरति. परन्तु तथा गाढं मां न प्रहरति यथाऽहं दुःखमुक्ता स्वर्गवासिनी स्वामिनामागमनं प्रतिमालयन्ती स्थास्यामि. किन्तु सततं तद्वियोगाग्नौ पतिता यथा सम्यक् दुःखं भोक्ष्ये तथा शनैः शनैर्मर्माणि विध्यति. तत् सखि! यदि शक्यं तदा कथमपि मम प्राणप्रियमानीय संजीवय मां. त्वां चाहं प्राणप्रदायिनीं देवतामिव मन्ये. अथ यद्यशक्यमिदं मन्यसे तदा कालकूटसदृशं त्वरितं प्राणहारि विषमपि मे देहि. तच्च पीत्वा शान्तव्यथाऽहं सुखभाक् स्यामिति.

सा च दासी तस्याः प्रलापतस्तन्मनोगतं प्रियकरं ज्ञात्वा कृतकृत्या शीघ्रमेवागत्य महाराजं कनोजाधिपं जयचन्दं सर्वमकथयत्. स तु शिरसि वज्रेण हतइव नितान्तं विस्मितोऽभवत्. प्रथमं तु स तामेव दासीं मिथ्यावादिनीं मेने. परन्तु भूयोभूयः सशपथं बोधितः सत्यं मेने.

(५)

अथ तद्वृत्तं निशम्य दुःखभारमग्नः स कनोजाधिपः स्वयमचिन्तयत्-अहमस्मि परमभाग्यः. राजसूययज्ञं चिकीर्षुणा मया पृथ्वीराजविजयाय प्रेषितो वीरो बन्धुर्वालुकराय एव निहतः. इयं च सकलगुणमण्डिता संचारिणी रतिरिव सौन्दर्यशालिनी देवांगनेव

सकलादरपात्रीभूता ममैकाकिनी पुत्री संयोगिताऽपि तमेव कामयते. परन्तु वृथा शोकेन किंवा स्यात्. यथाशक्ति मानवेन प्रयत्नः करणीयः! फलं तु दैवायत्तं. तच्च दैवं यद्यनुकूलं स्यात्तदा स प्रयत्नः सफलो भवति विपरीते तु विफल इति. इत्थं विचार्य तामेव दासीमवदत्-दासि !त्वमसि परमचतुरा. त्वयैव महता चातुर्येण प्रकटीकृतमिदं तस्या मनोगतं. साम्प्रतं तु तस्य पृथ्वीराजस्य दोषदर्शनेन वा पितृद्रोहपातककथनेन वा येन केनापि प्रकारेण तस्या मनः पृथ्वीराजान्निवर्तय. यदि त्वमिदं मदभिलषितं करिष्यसि तदा यदिच्छसि तद्दास्यामीति. साऽपि स्वामिभक्ता तथेत्यंगीकृत्य ययौ.

अथैकदा रहसि सा मुग्धां संयोगितामवोचत्-राजकन्ये ! योऽसौ त्वया मनसा वृतः पुरुषः स च केवलमलौकिकः सकलभूपालरत्नमित्यत्र न संशयः. तादृशं पुरुषमनेकजन्मसंचितपुण्यशालिन्य एव कन्यका लभन्ते, तथापि स तव पितुः शत्रुरित्यवश्यं विचारणीयम्. पिता हि यथा जन्मदो योग्याय वराय कन्यां दत्वाऽऽत्मजायै समुपाकरोति न तथा भर्ता. भर्ता च केवलं यज्ञयागादिधार्मिकक्रियासु अंशतः पुण्यभाजं पत्नीं करोति. तस्मात्सर्वेऽपि शास्त्रकाराः पितरमेवाधिकं मन्यन्ते. तद्यदि त्वं पितृद्रोहिणं पृथ्वीराजं वरिष्यसि तदा सर्वेऽपि लोकास्त्वां निन्दिष्यन्ति.

किंच-यद्यपि पितृद्रोहमगणयित्वा त्वया पृथ्वीराजो वृतस्तथापि तव पिता बलाढ्योऽवश्यमेव तेन समं योत्स्यत तदा कदाचिदस्त्य-

निष्टस्यापि संभावना. तस्मादहं वदामि पृथ्वीराजं विहायान्य एव कश्चन तरुणो राजपुत्रस्त्वया वरणीय इति.

सा च चतुरा संयोगिता सख्या इदं भाषणं निशम्यानुमित-पितृहृदया स्पष्टमेवोत्तरं दातुमिच्छन्ती सहासमवदत्-सखि? सत्यमेव त्वं मामनुकम्पसे. न कोऽपि मामीदृशमुपादिशत्. अहमपि तस्मात्प्रियतमात् मन्मनो निर्वर्तयितुं प्रयते परन्तु योग्यायोग्यपरीक्षाकुशलं तदेव ततो न निवर्तते. सर्वे हि जना लौकिकं वाऽलौकिकं वा विषयं मनसैव योग्यमयोग्यं वेति निश्चिन्वन्ति. तद्यदि निष्पापं मदीयहित-कारि मनो मां तमेव योग्यं निबोधयति तदा परेषां का कथा.

यदवोचः पितैव भर्तुरपेक्षया श्रेष्ठ इति तन्न सम्यक्-यत इह जगति सर्वेऽपि जन्तवो यथा यदृच्छया समुत्पद्यन्ते तथैव मानवा अपि? उत्पन्नाश्च बुद्धिमत्ताशालिनो जन्तवो मनुष्या भवन्ति. सर्वं हि मानवजातिकार्यं स्त्रीणां भर्तुःसाहाय्येन, न स्वातंत्र्येणेति शास्त्राणि वदन्ति. तत्कथय पश्वादिसाधारणजन्मदायिनोऽपेक्षया दुर्लभमानुषत्व-प्रापकस्य भर्तुः श्रेष्ठत्वं नवेति.

यदगदः—मम पितुः प्रियकरविरोधित्वात्तेन समं युद्धप्रसंगे कदाचिदनिष्टमपि स्यादिति तत्क्षत्रियकन्यकानां साधारणमेव. अद्यावधि यानि खलु मत्पित्रा युद्धानि कृतानि तत्र च ये हताः क्षत्रियास्तेषां

स्त्रीणामपि का गतिरभवत्. तस्मात् क्षत्रियकन्यका ईदृशादनिष्टात् न बिभ्यति.

मम त्वयं निश्चयः—यस्य कुले गृहीतं जन्म स पूज्यः पिता दुराचरणैर्न लोकापवादास्पदतां प्रापणीयः. अतः परं स्वजन्मनः साफल्यं स्वयमेव करणीयं न तत्र पितुरपेक्षेति.

सा च जडमतिर्दासी राजकन्याया इदं भाषणं निशम्य मूढा शनैः शनैः समागत्य सर्वं कनोजाधिपाय न्यवेदयत्. सोऽपि परं खिन्नः पुनः पुनरपि नानाविधैरुपायैस्तां तस्माद्व्यवसायान्निवर्तयितुं प्रयतमानोऽपि यदा न लेभे यशस्तदा रुष्टस्तां संयोगितां गंगातीरे नूतनं प्रासादं विरचय्य तत्रास्थापयत्. परितश्च नग्नखड्गधारिणो निरीक्षकान् स्थापयित्वा तदध्यक्षाय ' ममाज्ञां विना कोऽपि पुरुषो न प्रवेशनीय ' इति समादिशत्. साऽपि राजकन्या संयोगिता नष्टे-ऽपि स्वातंत्र्येऽखिन्ना परमेश्वरे निहितभारा कथमपि कालप्रतीक्षां चक्रे.

# षष्ठोगुच्छः।

१ पृथ्वीराजस्य सहायरत्नानि.

२ चामुण्डरायस्य शस्त्रत्यागः.

३ कयमाषामात्यस्य मृत्युः

४ गिझनीपतेः पुनः पराभवः.

(१)

महापराक्रमी कनोजाधिपतिर्जयचन्दोऽपि येन राजसूययज्ञविधाने विघ्नितः स पृथ्वीराजः कीदृशान् सहायानलभतेति निरूपयितुं वयमुपक्रान्ताः.

वाचकाः! अतिबुद्धिमानपि राजा सहायसाहाय्यं विना कदापि लोकं न्यायेन शासितुं न प्रभवति. असंख्याः खलु जना जगतीतले नानाविधान् दुरुद्यमान् कुर्वन्तो जीवन्ति. तांश्च कुमार्गतो निष्कास्य साधुमार्गे स्थापनमति-

दुष्करं कर्म. तत्र चैकाकी कदाऽपि न प्रभवति. अतो मतिमता राज्ञा यथाशक्ति समीचीनाः सहायाः संपादनीयाः. संपादितेषु तेषु विश्वस्य राजकार्यमपि करणीयं. एवंस्थिते सर्वासु प्रजासु अन्यायो दूरीभवेत्. अस्तु.

तस्यास्य न्यायेन सर्वाः प्रजाः परिपालयतः पृथ्वीराजस्य चत्वारः सहाया मुख्या आसन्. ते च यथा कयमाषो नाम मुख्यमात्यः, चन्दबन्दीनाम कविः, पितृव्यो वृद्धः कन्हचव्हाणः, श्यालश्चामुण्डरायश्च.

त एतेऽलौकिकबुद्धिमत्ताशालिनः शूराः समये समये पृथ्वीराजं दुष्करे कर्मणि साहाय्ययन्तस्तदीयां कीर्तिं विस्तारयामासुः.

( २ )

तदानीं श्रीपृथ्वीराजस्य समीपे चन्दपुण्डीरनामा कश्चन क्षुद्रबुद्धिः सामन्त आसीत्. स तु पृथ्वीराजस्य चामुण्डराये प्रेमविशेषं वीक्ष्यासूयान्वितः प्रतिदिनं कुकल्पनाभिः पृथ्वीराजस्य मनोऽदूषयत. पृथ्वीराजस्तु तस्य वाचमनादृत्य तथैव प्रीतिमकरोत्. एकदा तु स दुष्टमतिस्तमवदत्--स्वामिन्? चामुण्डरायः स्वभागिनेये युवराजे रेणसीकुमारे निरतिशयां प्रीतिं करोति तत्र कारणमिदमेव-यत्-सिंहासनाद्युष्मान्निष्कास्य स्वभागिनेयः स्थापनीय इति. पृथ्वीराजस्तु तदसत्यं मन्यमानस्तमेव निरभर्त्सयत्.

एकदाऽद्वितीयधनुर्धारी द्रोण इवापरश्चामुण्डरायोऽरण्ये स्वभागिनेयं कुमारं धनुर्विद्यां शिक्षयितुं गृहीत्वाऽगच्छत्. शिक्षयित्वा च ततो निवर्तमानो दिल्लीनगरे यथेच्छं धावन्तं मदोन्मत्तं शृंगारहारनामकं राजप्रियं हस्तिनमद्राक्षीत्. स च कुमारं रिरक्षिषुस्तं हस्तिनं परिहृत्यापरेण मार्गेण राजप्रासादमागन्तुं प्रचचाल. परन्तु दुर्दैवतः स च मत्तो गजः प्रजाजनानां गृहाणि पातयन्नापणिकानामापणान्विध्वंसयंस्तमेवोद्दिश्याक्रन्तुमधावत् चामुण्डरायस्तु भीष्म इव निर्भीकः सहसा स्वाश्वं तथा चोदयामास यथा सोऽश्वः स्वाग्रपादौ हस्तिदन्तयोरारोप्य तस्थौ. चामुण्डरायेऽपि लघुहस्तः खड्गेन शुण्डादण्डं समूलमच्छिनत्. वामहस्तेन च गदाप्रहारं कृत्वा तं यमालयं प्रेषयास. स च हस्ती मृतः सन् यदा भूमावपतत्तदा परितः पण्यगृहेषु वर्तमानानि दुग्धभाण्डानि अधस्तान्निपेतुः. रुधिरप्रवाहश्च दुग्धप्रवाहमिश्रो विचित्रामेव शोभां बभार.

शृंगारहारनामा हस्ती सामन्तेन चामुण्डरायेण निहत इति सर्वत्र प्रसृतां वार्तां श्रुत्वा पृथ्वीराजः सुतरां विसिष्मिये. अत्रान्तरे सूचकैश्च निवेदितकल्पितावास्तववृत्तः स पृथ्वीराजश्चामुण्डरायेण हस्तिहननमिषेणाहमेव हत इति मन्यमानः परं चुकोप. कोपविनष्टमतिस्तदानीमेव रामगुरुपुरोहितद्वारा तं चामुण्डरायं बन्दीकर्तुमादिदेश. तादृशमनिष्टमादेशमाकर्ण्य सर्वेऽपि सामन्ताः पृथ्वीराजं तथा न कर्तुं विज्ञापयामासुः, परन्तु क्रोधातिरेकनष्टसदसद्विवेकमतिर्न गृण्हात्तद्विज्ञापनाम्.

अथागतिः श्रीरामपुरोहितः स्वामिनियोगानुष्ठानाय शृंखलां गृहीत्वा चामुण्डरायस्य पुरत आजगाम. अश्रावयच्च तं स्वामिनियोगं. स तु प्रकृत्यैव धीरः प्रशान्तान्तःकरणेन स्वामिनो नियोगं श्रुत्वाऽवदत्-पुरोहितराज? त्वमितो गत्वा स्वामिनं पृथ्वीराजं वद-चामुण्डरायः पृच्छति स्वामिना शृंखलाग्रहणायाज्ञा प्रदत्ता, सा च स्वीकृताऽपि. परन्तु शस्त्रत्यागं विना शृंखलाग्रहणमशक्यं, तत्किं मया शस्त्रं त्यक्त्वा शृंखला धार्या? त्यक्तं शस्त्रं चामुण्डरायः पुनर्नगृण्हातीति जानात्येव स्वामीति.

पृथ्वीराजस्तु तेन पुरोहितेन पृष्टोऽपि कोपप्रनष्टप्रज्ञः-नास्त्यावश्यकता तव साहाय्यस्य. तत्त्वमद्यप्रभृति शृंखलामेव धारय-इति पुनरपि कथयामास. स तु स्वामिभक्तश्चामुण्डराय इमं नियोगं श्रुत्वा प्रहसन् परमादरेण शस्त्रं निक्षिप्य लोहशृंखलां हस्ताभ्यामुवाह. तद्वीक्ष्य सर्वेऽपि सामन्ताः प्रजाजनाश्च परं दुःखाकुलाः पृथ्वीराजं निनिन्दुः

वाचकाः? यद्यपि पृथ्वीराजः परं बुद्धिमानासीत्तथापि क्षत्रियाणां बुद्धेरजोगुणप्रधानतया तस्यां सर्व एव विकाराः प्रबला भवन्ति. यथाहि तेषां प्रसादो भयंकरस्तथैव कोपोऽपि. सत्वप्रकृतावपि यद्यपीमे विकारा जायन्त्येव तथापि सत्वस्य, अविचार्य कस्यापि कार्यस्याविधानस्वभावत्वेन न तत्रेदृशो हानयो जायन्ते. अतएव रजोगुणापेक्षया सत्वगुणस्य श्रेष्ठ्यं. अस्तु.

[ ३ ]

एवं चामुण्डरायं बन्दिनं विधाय शान्तकोपः स पृथ्वीराज एकाकी स्वयं विचारयन्निदमात्मनो महत्स्खलितं मेने. सर्वेषामपि प्रजाजनानां तथा सामन्तानां च संलापान्निशम्य पृथ्वीराजो नतराम-खिद्यत. तं चेमं खेदं बहिरप्रदर्शयितुकामो मानासिकव्यथापरिहाराय च पृथ्वीराजो मृगयामिषेण वनान्तरं जगाम. पश्चात्सर्वमपि राजकार्यं मुख्यामात्यः कयमास एवाकरोत्. स तु परं स्वामिभक्तो बृहस्पतिरिव कुशाग्रमतिर्भीष्म इव प्रतिस्पर्धिभयंकरो द्रोणइव सकलशस्त्रास्त्रविद्याकुशलो न्यायेन प्रजा अपालयत्. पृथ्वीराजो मृगयार्थं वनं गतोऽपि-स्वामात्यः कथं राज्यकार्यं करोतीति ज्ञातुं निभृतं रात्रौ दिल्लीनगर-मागत्य सर्वमपश्यत्.

वाचकाः ! इदं खलु संसारचक्रं विचित्ररचनमलौकिकमस्ति. यदा हि एतत्संसारचक्रारुढस्य कस्यापि जीवस्य भाग्यमुदयोन्मुखं वर्तते तदा तस्य तादृशा एव सहाया भवन्ति. बुद्धिरपि तस्य सन्मार्ग-वर्तिनी सदैव कर्तव्यदक्षा भवति. अथ यदा स पतनोन्मुखो भवति तदा तस्य ते प्राचीनाः सहाया एव शत्रवो जायन्ते. सदसद्विवेक-शालिनी तस्य बुद्धिरपि प्रतीपा संजायते. किं बहुना स यावच्छक्ति सर्वाणि कार्याणि पूर्ववद्विचार्य कुर्वाणोऽपि अनिष्टमेव फलं लभते. तस्मात्सज्जना महाभागाः यो हि परां काष्ठामैश्वर्यस्य समारूढस्तेन हर्षोऽपि न कार्यः, यश्चाधोगतिं प्राप्तस्तेन खेदो न करणीयः. यथा घटीयंत्रनिबद्धा घटकाश्चालकप्रयत्नमनुस्मृत्योपर्यधोगच्छन्ति तथैव

दैवेन प्रचालितं संसारचक्रमारुढा वयमपि नीचोत्तमां गतिं लभामह इति. अस्तु. प्रकृतमनुसरामः.

एकदा कयमाषो राजकार्यविधानार्थं राजसभां गच्छन् मार्गेऽलौकिकलावण्यशालिनीं सुमनोहरलोचनां, मयूरपाशसमकेशपाशां, कुसुमगुच्छसमलंकृतधम्मिलां, अतिशुभ्रमल्लिकाकुड्मलसुन्दरदन्तावलिमनोहरवदनकमलां, लावण्यनिर्जिते चन्द्रकले इव हीरकमये कुण्डले कर्णाभ्यां वहन्तीं, अत्युन्नतकुचयुगललुण्ठन्मुक्ताहारहृदयहारिणीं, कामातुरेणेव नपुंसकेनापि कौशेयवस्त्रेण समाश्लिष्टगात्रं, ताम्बूलसेवनरक्ततराधरोष्ठनिपतद्दिव्यसुधां भूमिगतामुर्वशीमिव विविक्तवातायनास्थितां कांचन गणिकामपश्यत्. तस्मिन्नेव क्षणे स विद्वानपि विचारशीलोऽपि कामदेवस्य वशो बभूव. स तु कथमपि जनलज्जाभीतो महता प्रयत्नेन चित्तमवधार्य राज्यकार्याणि विधाय स्वगृहमागतः परमस्वस्थचित्तो बभूव. स च तस्या गणिकाया वृत्तं ज्ञातुकामः स्वीयां विश्वस्तां दासीं प्रेषयामास. सा च निभृतं संनिमन्त्र्य तां पृथ्वीराजस्य गणिकां कर्नाटकीनाम्नीं निवेदयामास.

अमात्यः कयमाषो राजनीतिचतुरो राजगणिकाभिलाषमन्याय्यं जानन्नपि काममूढचेतास्तस्याः समीपे गन्तुं मनश्चक्रे. नमोऽस्तु तस्यै प्रबलायै कामवासनायै. या च विद्वांसमपि वशीकृत्य स्वदासं करोति! अस्तु. ततश्च स कयमाषः पुनरपि स्वानुरागबोधिकां पत्रिकां तदान्तिके प्रेषयामास. साऽपि जात्या गणिका राजाश्रिताऽपि मूलस्वभावमविस्मरन्ती तदनुमतमुत्तरं प्रेषयामास. कयमाषश्च तल्लब्ध्वा स्वर्गं

हस्तगतं मन्यमानः संध्यासमयमनुपालयन् कथमपि संततपातिनो मारशरानसहत.

अथ स्वनाथं देशान्तरं गतं प्रेक्ष्य परपुरुषेण चन्द्रेण समं रममाणायाः प्राक्दिग्गामिकाया मुखे सुरम्यहासमनोहरे, सूर्यसेवकेषु सकलपक्षिगणेषु स्वस्वामिन्याः प्रागूदिशाया अविनयं वीक्ष्य स्तब्धेषु, मन्दमन्दमकरन्दकणवाहिनि चन्दनतरुगणाश्लेषसुगन्धौ अभिसारिका-मार्गप्रदर्शके सेवक इव प्रवहाति समीरे, सुविकचमुखकमलमनोहरासु कमालिनीलतासु, सालंकृतासु परपुरुषागमनमार्गदत्तनेत्रासु गणिकासु, यथाशक्ति प्रवृद्धांधकारनिराकरणपरेषु दीपेषु प्रज्वलत्सु सत्सु, स कामातुरः कयमाषो महताऽऽनन्देन समलंकृतशरीरः केवलं दासी-सहायो वेषान्तरमास्थाय तस्या गणिकाया भवनं गन्तुं प्रतस्थे.

साऽपि च गणिका प्रधानामात्यं पृथ्वीराजस्य परमसुहृदमागच्छ-न्तं निशम्य सन्तुष्टा सर्वमपि विलासभवनं सश्रीकं विधायोत्तमोत्तम-मद्यपरिपूर्णाश्चषकांस्तथा मांसमयं च भोजनं विधाय तदागमनं प्रति-पालयन्ती तस्थौ.

कयमापश्च तस्या भवनं प्रविश्य भुक्त्वा रुचिरं भोजनं मद्य-चषकं प्रेम्णा गणिकाया मुखे यावद्ददाति तावत्पृथ्वीराजः स्वराज्य-वृत्तं ज्ञातुकामो निभृतं रात्रौ दिल्लीनगरमागत्येच्छिनीकुमार्याः प्रासादं प्रविवेश. प्रविश्य च कुशलं पृच्छन् समीपवर्तिनि स्वकर्णा-टकीवेश्याया भवने महान्तमुत्सवं वीक्ष्य तत्कारणं जिज्ञासमानः

कयमाषप्रधानागमननिमित्तोऽयमुत्सव इति ज्ञातवान्. ज्ञात्वा चेत्थं कोपकलुषोऽपि विवेकावधृतमनाः 'वेश्यैवेयं तत्र का वा स्वकीयता' इति जगाद. राज्ञी इच्छिनीकुमारी च स्वपतेः पृथ्वीराजस्येदं भाषणं निशम्य सरोषं—एष च कयमाषः साम्प्रतं प्रमत्त इव लक्ष्यते. कथमन्यथा कर्णाटकीं स्वस्वामिगणिकां जानन्नपि तया सह रन्तुं मनश्चक्रे. स चैवं कुर्वन्नप्युपेक्षितश्चेदस्मादृशा राजपत्नीरपि परामृशेत् इति बभाषे. तस्या इदं वचनमाकर्ण्य मूर्ध्नि वज्रेण निहत इव नष्टविवेकमतिः कोपातिरेकरक्तलोचनः स्वीयं धनुर्गृहीत्वा तीक्ष्णं बाणं तस्य कयमाषप्रधानस्योरोऽभिलक्ष्यामुंचत्. स च बाणः कालसर्प इव महता जवेन गच्छन् पर्यंकावस्थितं विलासमग्नं कयमाषं हृदये द्विधाऽकरोत्. तदानीमेव ज्ञातपृथ्वीराजागमनः पश्चात्तापदग्धः स कयमाषामात्यः 'सदृशं मया कुकर्मणः फलं लब्धमिति वदंस्तस्मिन्नेव क्षणे धारिणीतले पपात. कर्णाटकीवेश्याऽपि राजकोपभीता तस्यामेव रात्रौ दिल्लीनगरादपसृत्य कनोजनगरं गत्वा तदधिपस्य कन्यायाः संयोगितायाः दासीभूत्वा तस्थौ. पृथ्वीराजश्च लोककोपभीतिस्तस्य कयमाषस्य शवं स्वसेवकैर्निभृतं भूमिसात्कारयामास. स्वयं च पुनरपि मृगयार्थमरण्यं ययौ.

अथ प्रभातेऽपि न समागतं स्वपतिं प्रेक्ष्य चिंतातुराऽनिष्टमाशंकमाना साध्वी कयमाषस्य पत्नी भगवतीसहायं चन्दकविं सर्वं वृत्तं न्यवेदयत्. स तु भगवतीप्रसादात् सकलं वृत्तांतं ज्ञात्वा शोकाकुलस्तां कयमाषपत्नीं सत्यं वृत्तं निवेदयामास. निशम्य तच्छोकसागरमग्ना सा पतिव्रता स्वपतेर्गुणान् स्मारं स्मारं रुरोद. अन्ते सहगमनोद्यता स्वपतेः

र्मित्रं चन्दकविं -- भ्रातः! यदि मयि स्वल्पोऽपि कृपालेशः स्यात्तदा त्वं शीघ्रमेव मह्यं मम प्रियपतेर्मूर्धानं देहि. अहं च तं गृहीत्वा चितां प्रविष्टा स्वर्गे पतिं लभेय इति सांजलिबन्धं प्रार्थयामास.

चन्दकविरपि तां करुणामयीं स्वमित्रस्य कयमापस्य पत्न्या वाणीं निशम्य दुःखाकुलः सत्वरं वनाद्राजधानीं प्रत्यागतस्य पृथ्वीराजस्याज्ञां गृहीत्वा तस्य कयमापस्य शिरस्तस्यै साध्व्यै ददौ. तच्चादाय महताऽऽनन्देन सा सती वह्निं प्रविष्टा देवलोकमगात्. सर्वेऽपि नागरिका अकस्मादेव मुख्यामात्यस्य भयंकरं मृत्युं निशम्य भीताः सयत्नं तत्कारणज्ञानार्थं प्रयतमानाः पृथ्वीराजमेव तत्कारणं ज्ञात्वा क्रुद्धाः परमसंतुष्टा अभवन्. राजाऽपि स्वापराधं घोरं मन्यमानो नितान्तमखिद्यत. तं च प्रधानघातेन खिद्यमानं प्रेक्ष्य चिंतातुराः सर्वेऽपि सामंतास्तदीयखेदापनयनाय मृगयामेवोत्तमं सुलभमुपायं मन्यमाना मृगयार्थं राजानं विज्ञापयामासुः. सोऽपि च किमपि चित्तविनोदकारणमन्वेषयन्ननायासप्राप्तमिदमन्वमन्यत.

(४)

अथ ते सर्वेऽपि सामंता महतानंदेन पृथ्वीराजसमेता मृगयार्थं महारण्यं ययुः. तत्र च नानाविधान् क्रूरान् पशून् हत्वा प्रकटितशौर्याः कतिपयदिनानि तस्थुः. ततश्च ते क्रमेण नानारण्यानि पर्यटन्तः पानिपतरणक्षेत्रमाययुः. तत्र परमपवित्रभागीरथ्यास्तीरे कलत्रसनिवासा सानंदाभितस्ततो विहरन्तस्ते सर्वेऽपि सामन्ताः पृथ्वीराजं संतोषयामासुः. तदानीं च दुर्गाकेदारो नाम विद्वान्नानादेशसंचार-

चतुरः कविवरः पृथ्वीराजस्य संनिधिमागत्य स्वविद्यापरिचयं दर्शयितुं तथा सुप्रसिद्धेन भगवतीप्रसादशालिना चन्दकविना समं विवादितुं च मनीषां प्रदर्शयामास. पृथ्वीराजोऽपि विद्वज्जनादरपरः काव्यरसिकस्तदनुमुमुदे. अचिरादेव चन्दस्य तथा दुर्गाकेदारस्य साहित्यविद्याकौशलं मतिनैपुण्यं च वीक्ष्य सन्तुष्टस्तं दुर्गाकेदारमपारद्रव्यस्वामिनं विधाय स्ववासगमनाय विसर्जयामास.

स च दुर्गाकेदारो विद्वान्नानादेशान् पर्यटन् गिझनीश्वरस्य कीर्तिं निशम्य तं द्रष्टुकामो गिझनीनगरं जगाम. मार्गे च सोनपूरनगरस्य समीपे गिझनीश्वरः शहाबुद्दीनः स्वसेनया सह कल्पसनिवास आसीत्. तत्र च गत्वा गिझनीनाथमाशीर्वादैरभिनंद्य मोहब्बतखाननाम्नो बलाढ्यस्य प्रधानामात्यस्य निवासेऽतिष्ठत्. अचिरादेव तत्र पिंगलजटाकलापधारी भस्माविलनिखिलगात्रो व्याघ्रांबरः कश्चन तपस्विवेषधारी दूतः समायातः. स च तं मोहब्बतखानमवदत्-अमात्यश्रेष्ठ! साम्प्रतं भवद्भिर्निःसंशयं दिल्लीपतिः पृथ्वीराज आक्रमणीयः. अस्मिन्नाक्रमणेऽवश्यमेव यूयं यशस्विनो भविष्यथ. यतो योऽयं प्रसिद्धश्चामुण्डरायो भीम इव बलाढ्यः सामंतो दिल्लीपतिश्यालकश्चासीत् स पृथ्वीराजेनैव शस्त्रग्रहाय शपथं कारयित्वैव बंदीकृतः. तथैव च बृहस्पतिरिव कुशाग्रमतिः प्रधानामात्यः कयमाषो राज्ञा स्वयं निहतः. साम्प्रतं तु पानिपतग्रामसमीपेऽरण्ये मृगयार्थं गतः किमपि राज्यकार्यं न पश्यति दिल्लीपतिः. तदास्मिन् समयेऽकस्माद्गत्वाऽऽक्रान्तोऽवश्यमेव पराजेष्यत इति.

मोहब्बतखानस्तु तस्य गूढचारस्येदं भाषणं निशम्य सानन्दः सत्वरमेव तद्वृत्तं स्वामिने शहाबुद्दीनाय निवेदयितुं जगाम. दुर्गाकेदारस्तु तं मुनिवेषधारिणं यवनचारं ज्ञात्वाऽस्वस्थचित्तः स्वयमेवेदं सर्वं वृत्तं पत्रमारोप्य पृथ्वीराजाय निवेदयितुं कमप्यौष्ट्रिकं प्रेषयामास. पृथ्वीराजस्तु तेनौष्ट्रिकेण समानीतं वृत्तमाकर्ण्य सावधानः सर्वान् सामन्तानेकत्रीकृत्य शहाबुद्दीनस्यागमनं प्रतिपालयंस्तस्थौ.

अचिरादेव च स गिझनीपतिः शहाबुद्दीनो महता यवनसैन्येन समं तं पृथ्वीराजमाचक्राम. आक्रम्य च घोरं संहारं प्रावर्तयत्. दिल्लीपतिः पृथ्वीराजोऽपि युद्धकुशलः वृद्धस्य स्वपितृव्यस्य कन्हचव्हाणस्यानुमत्या स्वसैन्यव्यूहान् व्यरचयत्. क्षत्रियसैनिकाश्च संख्यया न्यूना अपि महतः प्रबलान् यवनसैनिकानजयन्. भूयो भूयो लब्धैः पराभवैः खिन्नः शहाबुद्दीनोऽस्मिन् युद्धे स्वप्रयत्नस्य परां काष्ठामकरोत्तथापि स पृथ्वीराजं जेतुं न प्राभवत्. शीघ्रमेव च पूर्ववत् क्षत्रियसिंहैः पराजितास्ते यवनगजा गिझनीनगरमभिलक्ष्य पलायितुमारभन्त. तैः समं पलायमानः शहाबुद्दीनोऽपि केनचित्पृथ्वीराजसामन्तेन बन्दीकृत्यानीतः पृथ्वीराजं प्रणिपपात. तं च प्रणिपतन्तं वीक्ष्य स्मेरमुखः पृथ्वीराजस्तमाह—यवनपते! भूयो भूयः पराजितोऽपि त्वमार्यावर्ताक्रमणान्न विरमसि! किमर्थं वृथा सैनिकहत्यां करोषि. किमर्थं च दीनानां नः प्रजाजनानां शापान् गृह्णासि. किमर्थं च प्रभूतैरुपायनैः स्वकोशान् रिक्तान् करोषि! तद्विरमास्मात् भारतविजयरूपाद्व्यापारात्. अहं त्वां सत्यमेव कथयामि—यावदस्यां भारतभुवि क्षत्रियकुलमवशिष्यते तावत् दुष्करो भारतविजयो भवतीति.

शहाबुद्दीनस्तु तस्य पृथ्वीराजस्येमां गर्वोक्तिं निशम्य मनसि नितांतं कुपितोऽपि स्वस्थितिं विभाव्य शनैरवदत्- राजन्? प्रयत्नश्च पुरुषाधीनो नतु फलं. तत्तु दैवायत्तं. परन्तु फलं न लभ्यत इत्येतावता प्रयत्नादुपरमणं कापुरुषस्य लक्षणं. यदि मानवोऽनलसः सन् सततं प्रयत्नं कुर्यात्तदाऽवश्यमेव स फलं लभेतैवेति.

पृथ्वीराजश्च तस्योत्तरे मनोऽदत्वोच्चैर्जहास. पूर्ववच्च अष्टसहस्रसंख्याकानुत्तमानश्वानुपायनत्वेन तस्माद्गृहीत्वा तं मुमोच. ततश्च महताऽऽनन्देन दिल्लीनगरमागत्य विजयोत्सवमकरोत्.

# सप्तमो गुच्छः।

१ कनोजाधिपाक्रमणे विचारः.

२ चन्दकवेः सत्कारः.

३ पृथ्वीराजशोधने जयचन्दस्य प्रयत्नो यशस्विता च.

४ लंगडीरायस्य सैनापत्यम्.

[ १ ]

एवं प्रबलं गिझनीपतिं शहाबुद्दीनं विजित्य लब्धख्यातिः पृथ्वीराजः परेषां दुर्दर्शनोऽभूत्. सर्वे च तदयाः प्रतिस्पर्धिनस्तस्य सर्वत्र प्रसृतं यशो वीक्ष्य खिन्नाः प्रतिकारासमर्था दिवाभीता इव तूष्णीमतिष्ठन्.

एकदा पृथ्वीराजे राज्यकार्याणि विधाय स्वसहायैः समं मंत्रस्थानमुपविष्टे सति कनोजनगरात्समागतः कश्चन गूढचारी चारो द्वारपालनिवेदितागमनः सरभसमागत्य प्रणिपपात अब्रवीच्च–स्वामिन् ! अहं खलु नानादेशान् पर्यटन् कनोजनगरमगच्छम्. तत्र च कृतस्थितिर्निभृतं चरन्निदमश्रौषम्–राजा जयचन्दो राजसूययागे विघ्नविधानात् परं रुष्टः स्वामिपादेभ्यः परं द्वेष्टि. परन्तु तस्यैकाकिनी कन्या भूतलवासिनी देवांगनेव मूर्तिमती रतिरिव ब्रह्मणः कृतिकौशलसर्वस्वमिव षोडशवर्षदेशीया भगवतो मन्मथदेवस्य विजयपताकेव कनोजनगरललामभूता वर्तते. सा तु सकलचारणमुखमण्डलवासिनीं शारदज्योत्स्नाधवलां प्रतिभटहृदयकमलविदारिणीं स्वामिनां कीर्तिं समाकर्ण्य हंसीव लुब्धा परमनुरक्ता स्वामिपादानेव वरिष्यामीति कृतनिश्चया स्वामिद्वेषिणा तत्पित्रा जयचंदेन भूयोभूयो निबोधिताऽपि स्वाग्रहं न मुंचति. तेन च कुपितस्तस्याः पिता कनोजाधिपो गंगातीरे नूतनं प्रासादं निर्माय तत्र तां प्रतिबंधे न्यधात्. तत्र च स्वानुज्ञां विना कस्यापि प्रवेशं निषिषेध च. साम्प्रतं च सा सौन्दर्यखनिः केवलं कतिपयदासीभिः समेता दुःसहं कारागारवासदुःखं भजत इति.

पृथ्वीराजस्तदाकर्ण्य क्रुद्धः स्वसहायमण्डलाय किंकर्तव्यमित्यपृच्छत्. अवदच्च–' नाहं खलु संयोगितानुरागाद्ब्रवीमि किंतु क्षत्रियस्वीकृतव्रताभिमानात्. नः क्षत्रियाणां हीदं परमं व्रतं, यच्छरणागतानां परिपालनं. अनेन व्रतेनैवेह जगति क्षत्रियजातिः सर्वेषामादरपात्रं संवृत्ता. तद्यदि मदनुरागापराधात् स्वकन्यां संयोगितां राजा जयचंदः स्वद्रोहिणीं मन्यमानः प्रतिबन्धे स्थापयति तदा मया

साऽवश्यं मोचनीया आत्मप्राणानपि तृणीकृत्य रक्षणीयेति मन्ये. अस्मिन्विषये भवतां को वाऽभिप्राय इति ज्ञातुमिच्छामीति

ते सर्वे सामन्ताः पृथ्वीराजस्य प्रश्नमाकर्ण्य सानन्दं तदनुकूलमेवावदन्. पितृव्यः कन्हचव्हाणस्तु 'यद्यपीदं सर्वं सत्यं तथापि स कनोजाधिपः बलाढ्य इति न विस्मरणीयम्. यथैव स बलाढ्यस्तथैव स धनाढ्योऽपि सांप्रतं तु राजसूययज्ञार्थमाहूतैर्विविधैर्भूपालैरानीतैरुपायनैः तस्य कोशाः परिपूर्णाः सन्ति. तद्यत्किंचिदपि कर्तव्यं सविचारमेव कार्यमिति. अहं तु पश्यामि—यथाऽस्माभिर्युक्त्या राजसूययज्ञे विघ्नं विधाय स यागः प्रतिबद्धस्तथैव कयापि युक्त्या संयोगिताऽपि हरणीया. वयं च तस्य संपदं भूमिं च न वांछामः. तस्मात् कृष्णवत् केनाऽपि मिषेण पृथ्वीराजेन संयोगिता दिल्लीनगरमानेया. वयं च सर्वथा तं साहाय्ययिष्याम इति जगाद.

चन्दकविस्तु तूष्णीं स्थित्वा सर्वेषां भाषणानि शृण्वन्नुवाच—स्वामिन्! अयमर्थोयुक्त्यैव साधनीयो न शक्त्या. सा च युक्तिरित्थम्—अहं च तस्मै जयचंदायाशीर्वाददानमिषेण कनोजनगरं गच्छामि. तत्र सर्वेऽपि सामन्तास्तथा पृथ्वीराजश्च मदीयाः परिचारका नाम भूत्वा मयैव सममागच्छन्तु. वयं च सर्वे निभृतं तद्राज्यं प्रविश्य तदीयं बलमबलं च विलोक्योचितकाले योग्यमेव करिष्याम इति.

दिल्लीपतिः पृथ्वीराजस्तथा सर्वेऽपि तदीयाः सामंताः चंदकविकथितामिमां युक्तिं निशम्य सन्तुष्टास्तथैव वर्तितुमनुकूला अभवन्.

अथ सुमुहूर्ते सर्वेऽपि पृथ्वीराजप्रभृतयः सामन्ताः चन्दकविराजस्य सेवका नाम भूत्वा दिल्लीनगरात् कनोजनगरं प्रति प्रतस्थिरे. चन्दकविश्चैकादशसहस्रपरिमितां सेनां जग्राह. मार्गे च बहून्युपद्रवेऽन्यभवंस्तथापि दृढनिश्चयः पृथ्वीराजः सर्वैर्जनैः समं कनोजनगरमाजगाम.

[ २ ]

सर्वां सेनां तथा स्वसेवकान् बहिर्नगरात् स्थापयित्वा चन्दकविः सेवकद्वारा स्यागमनं कनोजाधिपाय निवेदयामास. सोऽपि तदागमनं निशम्यातिसन्तुष्टः परमादरेण तं राजसभागमनाय विज्ञापयामास. चन्दकविस्तु तदाह्वानमंगीकृत्य पृथ्वीराजं जलकुंभधारकसेवकमिषेण स्वेन समं सभामण्डपं निनाय.

जयचन्दोऽपि चन्दकविमागतं निशम्य प्रत्युद्गम्य सादरं सभामानीय चोत्तरे आसने समुपवेशयित्वा कुशलमपृच्छत्. चन्दकविरपि स्वकुशलं निवेद्य राजानमाशीर्वादेन—

॥ दुर्गा ते विदधातु भव्यमखिलं कन्नोजपृथ्वीपते ।
। निष्प्रत्यूहपलौ समाप्तिमयतां यागेश्वरस्त्वत्कृतः ॥
॥ एभिः क्षत्रियवंशजैर्महिभुजैः संसेव्यमानोऽधुना ।
। स्वर्गं स्वर्गपतेः सुदुर्लभतरं शूरैः परं प्रापितः ॥ १ ॥

समनुजग्राह. सकौतुकमपृच्छच्च--

यागार्थं च निमंत्रिता महिभुजः सर्वेऽपि प्राप्ता अमी ।
तेन त्वं परिशोभसे सुनृपते ! नक्षत्रमालान्वितः ॥

राज्ञीनाथवदत्र किंतु सुमतिः सम्राद् च दिल्लीपतिः।
पृथ्वीराद् परिदृश्यते न च कुतो मान्यश्चितोऽडेश्वरः ॥२॥

इति.

राजा जयचन्दश्च प्रथमश्लोकोक्तां स्वस्तुतिमवलोक्य नितान्तं हृष्टोऽपि द्वितीयश्लोकोक्तां स्वन्यूनतामाकर्ण्य रुष्टः सरोषमवदत्. भो चन्दकवे! अखण्डं खलु बन्दिजनवंशस्य दारिद्र्यं कोवा दूरीकर्तुं समर्थः? यूयं हि बन्दिनः सदैव दारिद्र्यनरके निवसथ? युष्मांश्च तत उद्धर्तुं शक्रोऽपि न शक्तः, त्रैलोक्याधीशो भगवान्नारायणोऽपि दरिद्रस्य दारिद्र्यं दूरीकर्तुं यदि न समर्थस्तदा के वयं? इति.

चन्दकविस्तु तदानीमेव—राजन्! वयं यद्यपि दारिद्र्यपीडितास्तथापि त्वादृशाः सम्पन्ना राजानः समागतानस्मान् यदि प्रत्युद्गम्य सत्कुर्वन्ति तदा तत् दारिद्र्यं न दोषः प्रत्युत गुण एव. एतादृशं दारिद्र्यं युष्मादृशा लक्ष्मीपतयोऽपि याचन्तीत्यहं मन्य इति सहासं प्रत्यवदत्.

कनोजाधिपस्तु तस्य चन्दकवेर्निस्पृहतां तथोक्तिचातुर्यं च वीक्ष्य सन्तुष्टः परमानन्देन तं कविराजमादरातिशयेन सिषेवे. अथ जयचन्दस्तं चन्दं कविं—कविश्रेष्ठ! त्वादृशेषु मित्रवरेषु सत्सु पृथ्वीराजो मह्यं कुतो द्रुह्यति! मम तातपादानां पृथ्वीराजजनकस्यानंगपालस्य च महान् स्नेह आसीदिति सर्वेऽपि जना जानन्ति, यदाऽनंगपालः सोमेश्वराय स्वकन्यां प्रादात्तदाऽस्माभिरेव धनसाहाय्यं कृतं. यदापि तेनानंगपालेन पृथ्वीराजो दिल्लीपतिः कृतस्तदाऽपि अस्माभि-

विरोधो न कृतः. एवं स्थिते पृथ्वीराजेन मदारब्धो राजसूययज्ञो विघ्नितः, सर्वे च समागता भूपालाः समं मया वृथा कोपिताः. मम बंधुर्वलुकरायश्च समरे निहत इति किं समीचीनं कृतं! इत्यपृच्छत्.

चन्दकविश्च जयचन्दस्येमं प्रश्नं निशम्य– राजन्! कनोजपते! यथा त्वं मन्यसे 'पृथ्वीराजो मह्यं द्रुह्यति' इति तन्न समीचीनं. यथा तव पितामहोऽनंगपालः कनोजाधिपेन समं स्नेहेनावर्तत तथैव पृथ्वीराजोऽपि वर्तते. कथमन्यथा त्वयि दक्षिणां दिशं विजेतुं गते सति पश्चात् त्वद्राज्याक्रमणाय समागतं गिझनीपतिं शहाबुद्दीनं पराजित्य पृथ्वीराजस्तव राज्यं रक्षितवान्. राजसूययागस्तु कलियुगे शास्त्रनिषिद्धतयाऽधर्मप्रवृत्तिनिरोधाय विघ्नितो न त्वसूयया. यदि त्वादृशो राजाऽधर्माचरणं कुर्यात्तदा सर्वेऽपि त्वदीया वा परकीया वा प्रजाजना अधर्ममेवाचरेयुः. राजन्! यदि कश्चिद्धनाढ्यो वणिगपि राजसूययज्ञं कुर्यात्तदा तत्किं न्याय्यं भवेत्? तस्मात्त्वमपि 'पृथ्वीराजेन ममायं यागः प्रतिबद्ध इति दुराग्रहंस्त्यक्त्वा द्वेषं च मानसिकं विहाय पूर्ववत्स्नेहेन वर्तस्व. युष्मासु क्षितिपराजेषु परस्परं स्नेहेन वर्तमानेषु सत्सु कः खलु मन्दधीर्भारतं जेतुं शक्नुयात्. महंमदीयधर्मानुसारी शहाबुद्दीनः अपि परस्परद्वेषपरान्नः प्रेक्ष्य भारतमाक्रन्तुमिच्छति. भगवती चण्डी युष्मान् सर्वानपि प्रेम्णा वर्तमानान् चिरंजीविनो विदधातु इति साशीर्वचनमगादीत्.

जयचन्दस्तु चन्दकवेरिदं भाषणं सत्यं मन्वानोऽपि गर्विष्ठ उच्चैर्जगाद—अस्मिन् समवेते राजमण्डले पृथ्वीराजसमः कोप्यस्ति

वा नवेति? अनवसित एव तदीये वाक्ये क्रुद्धश्चन्दकविः समुत्थाय सेवकवेषगतं पृथ्वीराजमुद्दिश्यांच्चैरवदत्–सकलगुणमण्डितो वयसा षण्मासाधिकषट्त्रिंशद्वर्षो दुर्जनानां शास्ता भारतभूपतिलकश्चव्हाण-कुलोत्पन्नः सर्वैरार्यावर्तवासिभिर्नमस्कृतः सम्राट् पृथ्वीराजसमः पृथ्वी-राज एव नान्य इति.

( ३ )

राज्ञा जयचंदश्च कोपकलुषस्य तस्य स्वामिभक्तस्य चन्दकवेरिदं भाषणमभिनयं तथा पश्चात्स्थितस्य जलकलशधारिणः सेवकस्य च राजकीयं तेजो वीक्ष्य विस्मितस्तं सेवकमेव पृथ्वीराजममन्यत. अक-रोच्च मनसि 'अयमत्र छद्मना समागत इदानीमेव बन्दीकर्तव्य इति. राजानं च विचारमग्नं विलोक्य चन्दकविर्मनसि नितान्तं भीतोऽपि निश्चिन्त इवातिष्ठत्. राजा च यदि मयाऽयं सेवकः पृथ्वी-राज इति बन्दीकृतः सत्यमेव क्षुद्र सेवकः स्यात्तदा सर्वेपि जना मां हसेयुः. वदेयुश्च दुर्बलाय जयचन्दाय प्रबलः पृथ्वीराजो यत्रकुत्रापि भासत इति. तत्कथमयं सेवकः पृथ्वीराजो नवेति निर्णयमिति स्वयमेव विचारयन् पृथ्वीराजविज्ञानायैकां युक्तिमलभत- साचेत्थम्.

येयं राजकन्यायाः दासी कर्णाटकी नामास्ति, या च पूर्वं पृथ्वी-राजसमीप आसीत्. तस्या अयं नियमः–सा च सर्वस्मिन् जग-तीतले पृथ्वीराजमेव पुरुषं मन्वाना तं वीक्ष्यैव स्वमुखं पटेनावृणोति नान्यथा. तद्यदि सभामाहूता सा दासी स्वमुखमावृणुयात्तदा अयं पृथ्वीराज इति ज्ञातव्योऽन्यथा साधारणः कश्चन सेवक इति.

विचार्य चैवं संजातानदः सत्वरं सेवकमाहूय कर्णाटकीं दासीं सभामाह्वयत्. सा च राजाज्ञामनुसृत्य सभामागता दूरत एव पृथ्वीराजं प्रत्यभिज्ञाय लज्जया मुखं प्रावृणोत्. तां मुखावरणोद्यतां वीक्ष्य कविश्चन्दो नेत्रसंकेतेन तां—वयमिह कपटेन समागताः, यदि त्वं पृथ्वीराजोऽयमिति मुखप्रावरणेन दर्शयिष्यसि तदा वयं सर्वे बन्दिनो भविष्यामः. किंच—राजा जयचन्दः प्रथमत आरभ्य पृथ्वीराजं द्वेष्टि तदधुनाऽनायासेन स्वहस्तगतं तमवश्यमेव स प्राणैर्वियुंज्यात्तदा स्वामिघातपातकमपि लप्स्यसे. तत्कयमापीमेव सम्राजं पृथ्वीराजं स्वकर्मणा मा मारयेति सूचयामास.

सा प्रकृत्यैव स्त्री तत्रापि गणिका सहसैव तस्य चन्दस्य मनोगतं जानन्ती तस्मिन्नेव क्षणे मुखावरणं दूरीचकार. तां च स्वीकृतदूरीकृतमुखावरणां वीक्ष्य जयचंदो विस्मितोऽजातनिश्चयो जिज्ञासया तामेवापृच्छत्—गणिके ! त्वं हि प्रथमं स्वमुखं किमिति प्रावृणोः पश्चाच्चोदघाटयः? तत्सर्वं सत्यं कथयेति. दासी तु परमचतुरा राजानं साञ्जलिबन्धमवदत्. स्वामिन् ! अस्यां सभायां कविवरश्चन्दः समायातः स च पृथ्वीराज इव मम मान्यः. तत्तस्य सन्मानार्थं प्रथमं मया मुखमावृतं पश्चात्कारणभावादेव तदुदघाटयमिति. तदेतत् कर्णाटक्या वचनं निशम्य चन्दकविः परं सन्तुष्टस्तामाशीर्वचनैः समतोषयत्. सेवकवेषधारी पृथ्वीराजश्च स्वकपटाचरणप्राकट्यभीतः कण्ठगतप्राणस्तत्प्रतिवचनं निशम्य स्वजीवितं प्रत्यागतं मेने. जयचन्दस्तु तस्य सेवकस्य तेजो विलोक्य भ्रान्तचित्तः कर्णाटकीवचनं न सत्यमिति मन्यमानोऽपि प्रकटं तथा वक्तुमनीश्वरस्तूष्णीं तस्थौ.

अथ जयचन्दस्तं चन्दकविं कल्पतनिवासे विश्रांत्यर्थं व्यसर्जयत्. तस्य सेवार्थं सोजताधिपं रावणं नियोजयित्वा तं निभृतं 'चन्दकविनिवासः शङ्कितैर्निरीक्षणीयः, अज्ञातस्य कस्याऽपि पुरुषस्य प्रवेशस्तस्मान्निषेधनीय इत्यशात्. सोऽपि चाक्षरश इमां स्वामिन आज्ञां पालयामास.

ततश्च सावधानेनावस्थितं चन्दकविं राजा जयचन्दो बहुमूल्यैरुपहारैः परं सत्कारयामास. चन्दकविरपि राजरीतिमनुजानन्नुपहारहारकान् सेवकान् समतोषयत्. तथा दर्शनार्थमागतं मुख्यामात्यं सुमतिं तथा राजपुरोहितं श्रीकण्ठं सन्मानेनापश्यत्. निर्गतेषु जयचन्दराजसेवकेषु लावण्यवतीनां, षोडशवर्षीयाणां, हस्तयुगलधृतकनकपात्रविराजमानोपहाराणां, अप्सरसामिव समानवयस्कानां, दासीनां दलं चन्दकविनिवासस्य पुरत आजगाम. तद्वीक्ष्य सर्वे निरीक्षणार्थं नियुक्ताः सैनिका हृतचित्ता चित्राणीव स्तब्धं तस्थुः. मुख्येन सेनाधिकारिणा पृष्टा तदग्रेसरा दासी जगाद—वयं हि सर्वा दास्यो राजकन्यायाः संयोगितायाः. तदाज्ञयैव कवीश्वरं चन्दं द्रष्टुं वयमागता इति. द्वारपालेन च निवेदितागमना अनुमितिं लब्ध्वा प्रवेशिताः सादरं सर्वानप्युपहारांस्तस्मै कविराजाय समर्पयामासुः. चन्दस्तु सस्मितं तानुपहारान् स्वीकृत्य ताभ्यः समीचीनं पारितोषिकं वितीर्य 'अचिरादेव भगवानेकलिंगेश्वरो राजकन्याया अभिलषितं पूरयिष्यति' इति साभिप्रायमाशीर्वचनं प्रेषयत्. ता अपि सानंदास्तदाशीर्वचनं स्वस्वामिन्यै निवेदयामासुः.

कनोजाधिपश्च पृथ्वीराजसंनिधानशंकाकुलश्चन्दसेवानियुक्तान् स्वसेवकान् पृथ्वीराजशोधार्थमादिशत्. तेऽपि सदैव चन्दकविं मुख्यासनासीनं तत्समीप एव स्थितं जलकलशकधारकं तं सेवकवेषधारिणं पृथ्वीराजं पश्यन्तश्चिरादपि न तं प्रत्यभिजानन्.

एकदा रहसि किमपि संलपन्तौ चन्दपृथ्वीराजौ वीक्ष्य कश्चन सेवकः पृथ्वीराजोऽत्रास्तीति जातनिश्चयः सत्वरं गत्वा तद्वृत्तं जयचन्दाय निवेदयामास. जयचन्दोऽपि सत्वरमागत्य–तं सेवकं मुख्यासनस्थितं चन्दकविं चाश्रितमिव समीपस्थमवलोक्य जातनिश्चयस्तस्य गुप्तवेषधारिणः पृथ्वीराजस्य बंदीकरणाय निश्चयमकरोत्.

पृथ्वीराजोऽपि सेवकवेषधारणेन निर्विण्णस्तं चंदकविमवदत्-- मित्र! चन्दकवे! श्वः प्रभृत्यहं सेवकवेषं त्यक्त्वा सत्यं वेषं धरिष्यामि. जयचंदस्य तु सर्वं सामर्थ्यमस्माभिर्ज्ञातमेव. पूर्वं खल्वज्ञानतस्तद्भयमासीदधुना च लेशतोऽपि तन्नावशिष्टमिति. चंदकविस्तु पृथ्वीराजस्येदं भाषणमाकर्ण्य सहासं--पृथ्वीराजो जयचंदात्कियद्बिभेतीत्येषोऽचेतनोऽपि कथयतीत्युक्त्वा पृथ्वीराजमुखमपश्यत्. पृथ्वीराजोऽपि यदा श्वोऽहं प्रकटीभविष्यामि तदा तव शौर्यं कियदस्ति तदपि द्रक्ष्यामीति प्रत्युत्तरयामास. एवं तयोः प्रीतिविवादं श्रुत्वा समीपस्थो वृद्धः कन्हचव्हाणश्चंदकविं जगाद–कविराज! त्वं तु शत्रुभिराक्रांत आशीर्वादं दत्वाऽऽत्मानं मोचयिष्यासि, परन्तु नः क्षत्रियाणां शिरःकमलार्पणं विना मोक्षो न भवेदिति जानासि वेति. पितृव्यवचनमिदमाकर्ण्य सर्वेऽपि परिहासं विहाय कर्तव्यं विचारयामासुः

[ ४ ]

अथैकाकी पृथ्वीराजश्चन्दादीन् स्वसहायान् बहिर्गतान्विलोक्याऽनभ्यस्तसेवकवेषधारणखिन्नः स्ववेषं गृहीत्वा प्रजवममश्वमारुह्य सायंकाले गंगातीरे पर्यटितुमगात्. स च विमलपवित्रभागीरथीसलिलकणवाहिना, वसन्तसमयकुसुमितासंख्यलताश्लेषसामोदेन मन्दंमन्दं संचारिणा संध्याप्रवातेनापनीतमनःक्लेशः, अतिमृदुलपुलिनेषु क्रीडान्ति हंसमिथुनानि पश्यन्, रसमयपरिपक्वफलभारनम्राणां सहकाराणां पंक्तीरवलोकयन् चिरमरमत. राजा जयचन्दश्च प्रत्यक्षीकृतपृथ्वीराजस्तं बन्दिनं कर्तुं स्वसेनापतिमादिदेश. सेनापतिरपि सत्वरमेवानेकशूरसैनिकं सैन्यमादाय तं चन्दकवेः सेनानिवेशं प्रतिरुरोध. सर्वेऽपि चन्दकविप्रभृतयोऽकस्मात् महता सैन्येन परिवेष्टितं स्वनिवेशं वीक्ष्य विस्मिताः क्षणमात्रं कर्तव्यमूढा अजायन्त. तदानीमेवानेकयुद्धविजयशाली वृद्धः कन्हचव्हाणः स्वसामन्तं लंगडीरायमाहूयाब्रवीत्—वत्स ! लंगडीराय ! वयं चाकस्मादनेन कपटिना जयचन्देनाक्रान्तास्तदिदानीं त्वमग्रेसरा भूत्वा रक्ष स्वस्वामिनं. त्वमसि दिवंगतस्य स्वामिजीवरक्षणार्थं स्वमांसं वितरतः संजयरायस्य पुत्रः ! तदलौकिकस्वामिभक्तिं प्रदर्श्य समुज्वालय पितुः कीर्तिमिति. सोऽपि तदाज्ञां शिरसा कुर्वन् स्वसैन्यमादाय प्रबलमपि शत्रुसैन्यमाचक्राम. प्रावर्तत चोभयपक्षयोर्महान् समरः. तत्र च महाप्रतापिनं लंगडीरायं कृतांतमिव पश्यंतः सर्वेऽपि कनोजाधिपसैनिकाः पलायनपरा अभवन्. स्वसैन्यस्येमां दुर्दशां विलोक्य क्रुद्धो जयचन्दस्तस्य साहायार्थं रावणनामकं नगररक्षकं महता सैन्येन प्रैषयत्. सोऽपि समागत्य

त्वेषेण युद्धमानस्तान् भीतिविह्वलान् पलायनोत्सुकान् न प्रतिरो-द्धुमशकत.

कनोजाधिपः कनोजदुर्गमारुह्येदं युद्धं पश्यन् महाप्रतापस्य पृथ्वीराजसेनापतेर्लंगडीरायस्य शौर्यं वीक्ष्य भीतः कथमपि स हन्तव्य एवेति विचार्य स्वदुर्गे वर्तमानां भयंकरध्वनिं किलकिला-नाम्नीं शतघ्नीं पूरयित्वा तद्गोलकस्य लक्ष्यमकरोत्. तस्मिन्नेव क्षणे स स्वामिभक्तो लंगडीरायस्तस्य लोहगोलकस्य लक्ष्यतां प्राप्तश्चूर्णी-भावं प्राप.

तं लंगडीरायं स्वसेनापतिं समरभूमिपतितं प्रेक्ष्य धैर्यविगलितं पृथ्वीराजसैन्यमितस्ततो धावितुमारभत. तदानीमेव वृद्धः कन्हचव्हा-णस्तदग्रेसरो भूत्वा पुनरपि युद्धं प्रावर्तयत्. अस्मिन् संग्रामे जयचंदस्य सैन्यक्षयो महानभूत्. तेन दुःखी स पृथ्वीराजमलब्ध्वा संतप्तो निशायां स्वस्थानं ययौ. ते च सैनिका अपि स्वनिवेशं गत्वाऽतिष्ठन्. कन्हचव्हाणप्रभृतयः सर्वेऽपि पृथ्वीराजसामन्ता लंगडीरायस्य शोकेन विह्वलाः पृथ्वीराजचिंतयाऽपि व्यापृताः कथमपि कालं यापयामासुः.



# अष्टमो गुच्छः।

१ पृथ्वीराजस्य संयोगितायाश्च परस्परं दर्शनम्

२ तस्या अन्तपुरे प्रवेशः.

३ गान्धर्वविवाहः.

४ संयोगिताया दिल्लीगमने संमतिः.

( १ )

पृथ्वीराजश्च स्वनिवेशस्थानादेकाकी निर्गतः क्रमेणेतस्ततः पर्यटन् मृगयार्थं चक्रमे. त्वरितमेव कनोजनगरस्य नातिदूरे भयंकरश्वापदपरिपूर्णे गगनचुम्बिमहावृक्षावलीव्यापृते संततगर्जत्केसरिकुलविसृष्टसिंहनादभीतगजयूथचीत्कारव्याकुले, इतस्ततः संचरन्मृगगणनयनलहरीमनोहरे, महावने कृतप्रवेशः, क्रूरेषु व्याघ्रादिपशुषु प्रस्थापितस्वशौर्यचिन्हः प्रभूतानि श्वापदानि हत्वा श्रान्तः क्रमेण तस्माद्वनाद्बहिराजगाम. तदानीं निर्मलरजतरसप्रवाहमिव, महामूल्यघन-

सारवर्षमिव, हिमानीसंपातमिव, सुधाऽऽसारमिव, सर्वत्र निपतितां स्थाने स्थाने समीरणप्रचलितवृक्षच्छायाश्यामलां दृष्टिमनोहरां पार्वण-चन्द्रज्योत्स्नां निरीक्ष्य; निलीनपक्षिगणां ज्योत्स्नामयशुभ्रवस्त्रावृतां विकचकुसुमस्तबकालंकृतां, निद्रितां तरुणीमिव पृथ्वीमालोक्य; अतिमृदुलशाखाबाहुवलयाश्लिष्टवृक्षकान्तं, प्रफुल्लकुसुमगुच्छालंकार-समलंकृतं, मन्दवाहिना दक्षिणानलेन चालितं कामाकुलमिव लतात-रुणीगणं समीक्ष्य; मन्दमारुतसंपर्कसंजाततरंगेषु महातडागेषु क्रीडारतं विकसितकमलकोरकपतितपरागधूसरं, विसच्छेदनासक्तं हंसमिथुन-जातमवेक्ष्य; रात्रिंदिवं भक्तगणोद्धारतत्पराया भागीरथस्य मूर्तिमत्याः कीर्तेरिव भागीरथ्याः प्रवाहध्वनिं निशम्य सानन्दचेता अश्वादवतीर्य पद्भ्यामेव शनैः शनैश्चरन् गंगातीरमागच्छत्. तत्र च विशुद्धचंद्रिका-तादात्म्यं प्राप्तं अतिचपलधावमानमत्स्यगणसंपादितभेदं, गोधूमचण-कादिसस्यभारविनम्रैर्हरितैः क्षेत्रैरलंकृताभ्यां पिपतिषुकूलमृत्तिकापात-भयंकराभ्यां तीराभ्यामलंकृतं, अन्तःपतितचंद्रप्रतिबिंबच्छलेनास्य-देवांगनामुखकमलशोभमानं गंगाप्रवाहं प्रेक्ष्य प्रसन्नः श्रमापनयनाय अश्वं जलं पाययित्वा स्वयमपि पर्याप्तं मधुरं शीतं च गंगाजलं पपौ.

अथ प्रतितीरवर्तिनं, सुरम्यशुभ्रपाषाणमयं, चन्द्रिकानिर्मितमि-व गगनांगणविहरच्छिखरं, कनककलशमण्डितं, सुव्यवस्थितरचनम् अनेकवातायनविराजमानोशीरजवनिकामधुरं, प्रदीपप्रकाशप्रदीप्तम् अनन्तशस्त्रिकगणरक्षितं, विस्रब्धपरिसुप्तदासीगणसंकुलं प्रासादराजं स्वदृष्टिविषयमकरोत्. तं समीक्ष्य संजातकुतूहलः पृथ्वीराजः परमा-दरेण निरूप्यमाणस्तास्मिन्—सकलत्रिलोकीलावण्यव्ययेनानिर्मितं.

शाप्सरसांगणमिव, मदनबाणरक्षकमिव, षोडशवर्षदेशीयं, स्त्रीसमुदायमपश्यत्. स च तस्मिन् प्रदेशेऽकस्माच्छस्त्रिकगणरक्षिते प्रसादे निवसन्तं स्त्रीगणं वीक्ष्य विस्मितो विशेषजिज्ञासया सविशेषमपश्यत.

तत्र च सकलस्त्रीगणमध्ये मरकतमणिभासुरसुवर्णपर्यंके शयानां, शय्यासंसर्गविकीर्णकेशपाशाच्छादितमुखकमलां, शैवलप्रावृतकमलां कमलिनीमिव, सर्वतःप्रकाशमानप्रदीपप्रतिबिंबभासुरकपोलयुगलां हृदयस्थकामप्रदीप्तज्वालाव्याप्तामिव, उपधानीकृतहस्ताग्रकनिष्ठिकाविराजमानोर्मिकानीलमणिच्छविमनोहारिवदनां, अतिसुंदरबिसतन्तूपमभुजतालंकृतनितम्बमण्डलाम्, श्वासकम्पमानकुचकुड्मलहृदयहारिणीं, त्रिवलीदर्शनानुमितोदरभागां, रंभारुचिरोरुद्वयां मुग्धां हंसतूलमये शय्यान्तरे निमग्नैकभागां विश्रब्धं सुप्तां भीषणभुजंगमपरिवेष्टितां चन्दनलतामिव शस्त्रिकगणरक्षितां तां सुंदरीमद्राक्षीत्.

तेनाऽपि विबुद्धाश्चर्यः कावेयं! कोऽयं स्त्रीगणः! किमर्थमत्र वसति! शस्त्रिकगणश्च किमनुकूलो वा प्रतिकूलोवेति ज्ञातुं स्वाश्वेन समं तत्स्थलमागच्छत्. आगत्य च तस्य सौधस्य पुरतः किमपि विचारयंस्तस्थौ.

तस्मिन्नेव समये साऽपि तरुणी किमपि स्वमनोरथानुकूलं स्वप्नं पश्यन्ती संतुष्टा जागर्तिस्म. प्रतिबुद्धा च सा तं स्वप्नं स्वप्रियसख्यै निवेदयितुकामा तामपि त्वरया समबोधयत्. प्रबुद्धां तां प्रियसखी तं स्वप्नं निवेद्यान्तःपुरप्रदीपमालिकासंतापक्लेशान् परिजिहीर्षुस्तया सह गंगातरंगसंगशीतलवातनिवासं वातायनमागत्यातिष्ठत्.

तदानीमेव—गंगाशोभादर्शनासक्तं, अतिचपलवाजिराजसमीपस्थं, अतिगौरपादतलाभ्यां धृतोपानहं, सुवर्णशृंखलासनाथसव्यपादं, परमप्रियया शत्रुकण्ठनालच्छेदनदक्षया हीरकांकितसुवर्णकोशस्थितयाऽसिलतया समलंकृतकृशमध्यं, सव्यहस्तविराजमानबृहच्चापं, कपाटविशालोरस्कं, मौक्तिकहारसमलंकृतग्रीवं, इषुधिनिषंगमांसलितस्कन्धं, सुप्रसन्नवदनकमलं, सुदीर्घराजतेजःशालिनयनयुगलहृद्यं, अखण्डसुदीर्घशिरोरुहभासुरं, सुवर्णललाटपट्टसुंदरं मन्मथमिव स्वशत्रुं शंकरं प्रसादयितुं भागीरथीं शरणागतं, कनोजाधिपैश्वर्यदिदृक्षया स्वर्गादागतमिंद्रमिव, तं तरुणं पृथ्वीराजं निर्निमेषं पश्यन्ती मुहूर्तं निश्चलमतिष्ठद्राजकन्या संयोगिता. पृथ्वीराजं च गंगायां विहरतां मत्स्यानां लीलादर्शने बद्धमनसं वीक्ष्य स्वागमनं ज्ञापयितुकामा नूपुरध्वनिमकरोत्.

पृथ्वीराजश्च सहसैव श्रवणमनोहरेण नूपुरध्वनिना समाकृष्टमानसः संरंभेण मुखमुन्नमय्य—विगलितघनीभूतां ज्योत्स्नामिव, घनावस्थायिनीं सौदामिनीमिव विविक्तदेशवासिनीं, कमलामिव, तपस्यन्तीं देवांगनामिव, शंतनुवियोगोद्विग्नां गंगामिव, शीतलसुरसरिन्मरुत्संगकम्पमानमृदुलमूर्धजां, मस्तकस्थापितकुसुममालागंधलोभसमागतभ्रमरकुलनीलरत्नाशिरोभूषणां, मौक्तिकभूषणभूषितमनोहरकर्णपाशां, लावण्यसर्वस्वसौभाग्यातिलकदर्शनीयभालप्रदेशां, यमुनानदीतरंगानिव सर्वतो नयनकमलाभ्यां विसृष्टैर्दृष्टिक्षेपैरुत्पादयन्तीं, स्पष्टतरप्रतिबिंबितगंगाप्रवाहतटवृक्षसंपादितविशेषकृत्यरमणीयकपोलां, अधरीकृतबिंबाधरां, कम्बुकण्ठीं, अतिनिर्मले लावण्यस्रोतसी इव विगलित-

बाहुभुजलतिकां, मदनदुर्जयदुर्गाभ्यामिव, तारुण्यागमचिन्हाभ्यामिवातिनिबिडाभ्यां कुचाभ्यां हृदयहारिणीं, सूक्ष्मतरवसनपरिधानेन परिदृश्यमाननूतनरोमावलीसमलंकृतत्रिवलीमण्डितोदरलतिकां, अतिपीवरोरुयुगां, सुन्दरमंजीरसंगरुचिरगुल्फयुगलभासुरपदयुगलाम्, किसलयच्छविप्रपदां, तत्प्रतिबिंबरूपया सख्या सहितां, कांचन तरुणीं वीक्ष्य विगलितधैर्यो खिलीकृतनयनयुगलश्चिरमतिष्ठत्.

पृथ्वीराजश्च तदानीं मनसीत्थं व्यचिन्तयत्—कथमिमां दृष्टवतो मे धैर्यमेव विनष्टं? मन्मनश्च पुनरपि न प्रत्यागच्छति. अहं तु सदा नीत्यैव वर्तमानः कथमिमामवेक्ष्याविचार्य चानुरक्तः? इति. सापि राजकन्या पृथ्वीराजं निरीक्ष्य तत्समावस्थाऽभवत्.

( २ )

चतुरा दासी च स्वप्रियसख्याः संयोगितायास्तादृशीमवस्थां वीक्ष्य संतुष्टा झटिति सौधादवतीर्य गंगातीरमगात्. गत्वा च विनयेन तन्मुखासक्तदृष्टिं तन्मुखचन्द्रज्योत्स्नापाननिरतनयनचकोरं पृथ्वीराजं जगाद. भो मदनसुन्दर ! सकलभूपालचूडामणे ! यां राजकन्यां त्वं पश्यसि सैव त्वां स्वकोमलचरणनिक्षेपेण स्वप्रासादं सनाथीकर्तुं प्रार्थयते, नाल किमप्यत्याहितं? इयं हि सकलसामन्तनायकस्य कनोजाधिपस्य कन्या संयोगिता नाम. सा च तव सर्वत्र प्रसृतां सकलगुणनिधेः कीर्तिं निशम्यानुरक्ता त्वदागमनार्थं परमात्मानं प्रार्थयन्ती वराकयद्य तेनानुगृहीता. मां च जानात्येव स्वामी कर्णाटकीं नाम गणिकां. अहं च कुतश्चित् कारणाद्दिल्लीनगरं विहायात्रागता

त्वय्यनुरक्तां तत एव त्वद्द्वेषिणा तत्पित्राऽत्रैकान्ते प्रतिबन्धे स्थापितामिमां राजकन्यां संयोगितां विदित्व युष्मत्सेवाविधानेच्छयाऽहमत्र दासी अभवम्. साऽपि सर्वगुणमंडिता कल्याणी मां सखीं मन्यते न दासीं. एतादृशी गुणखनिः पृथ्वीपतिकन्या युष्मभ्यमेव योग्या नान्यस्मै. यथाहि कृष्णाय रुक्मिणी, तथैव भवतेऽपीयं. इयं च सततं त्वद्गुणगणश्रवणधृतजीविता स्वपितरमपि न बहु मन्यते. पित्रा जयचन्देन त्वत्तो मनो निवर्तयितुं चिरं प्रायति, परन्तु स्वल्पं यशो न लब्धं प्रत्युत स यथायथा नानाविधैरुपायैस्तथा कर्तुं प्रायतत तथातथाऽस्या मनस्त्वयि परमासक्तमभवत्. सांप्रतं तु त्वद्वियोगदुःखाकुला सम्प्रवृत्तं वसन्तं वीक्ष्य परं दुःखायते. कदाचित् मन्दं शीतलं च दक्षिणानिलं स्पृशन्ती सद्य एव मूर्च्छति. कदाचिदिमं प्रफुल्लं सहकारं मदनशरेषुधिं भावयन्ती वातायनानि पिधाय तूष्णीमेकाकिनी विलपति. कदाचित् कुसुमितमाधवीलतामण्डपं वन्हिमयमिव मन्यमाना गन्तुं नोत्सहते. कदाचित्—चूतांकुरपरिपूर्णेषु सहकारेषु स्थितस्य कोकिलस्य मनोरमानालापान् श्रवणदाहकान् मन्यमाना स्वकर्णावेव पिधत्ते. किंबहुना चन्दनगंधवाहिनः शीतलाद्दक्षिणानिलाद्दिलीतःसमागतमत्युष्णमपि वातं संभावितत्वदंगस्पर्शं बहु मन्यते. मां च प्रत्यक्षीकृतपृथ्वीराजां देवतां मन्यते. साम्प्रतं तु त्वत्प्रतिमां रात्रिंदिवं ध्यायन्ती संततनिपतदश्रुसमाकुलनेत्रा जाग्रती कालं यापयति. पितृकोपभिया मनोगतं स्पष्टं वक्तुमशक्नुवाना पुटपाकावस्थां बिभर्ति. तद्यदि पृथ्वीराज! तस्यामनुरागो वा, अनुकंपा वा, वात्सल्यं वा, प्रेम वा लेशतोऽप्यवशिष्टं स्यात्तदाऽविचारं त्वयाऽगत्योज्जीवनीया सेति प्रार्थयामीति.

पृथ्वीराजश्चाकस्मादन्धो दृष्टिमिव तृषितः सरितमिव क्षुधातुरः पाकशालामिव मुमूर्षुः संजीवनीमिव स्वाभिलषितपूरकां तां कामधेनुमिव मन्वानः सानन्दमुवाच -सखे? प्रियकारिणि? कमहं वदामि ईदृशमलौकिकमुपकारं विधाय त्वया सर्वथा वाचा मुषितोऽस्मि. क खल्वयं साधारणो जनः क च भूतलवासिनी देवांगनेव सुन्दरी संयोगिता? दासि? मदर्थे क्लेशाननुभवन्ती प्रियतमा संयोगिता पूर्वमेव त्वया कुतो न निवेदिता ! अस्तु. सम्प्रति वृथाकालयापनं विहाय शीघ्रं गत्वा प्रियतमा संयोगिता क्षमां याचनीयेति वदन्नेव रोमांचितसर्वगात्रः सत्वरगमनस्खलितगतिस्तया दास्या प्रदर्शितेन मार्गेण तस्याः कनोजाधिपकन्याया हृदयमिवान्तःपुरमाजगाम. अचिरादेव अतिसुंदरसुगंधितैलप्रदीपभासुरे, सर्वतः स्थापितबृहद्दर्पणप्रतिबिंबितजने, चित्रविचित्रपट्टवस्त्रसमाच्छादितभूतले, निर्निद्रकुसुमगुच्छसहस्रसामोदे, इतस्ततोधावमानदासीगणनूपुरशिंजितहृद्ये, व्यजनसंचालननियुक्तदासीगणकरकंकणध्वनिरम्ये, विविधक्रीडाखगमधुरभाषणरमणीये, नानाक्रीडासाधनमये, अनेकविलासिजनसुन्दरप्रतिकृतिमनोरमे, दासीगणमध्यदेशाविराजमानमेखलानिखातहीरककिरणव्याप्ते, तांबूलवल्लीवीटिकापरिपूर्णसुवर्णभांडसंकुले, मन्मथनिवास इव तस्या अंतःपुरे कृतप्रवेशस्तां मूर्तं स्वभाग्यमिव स्वाभीष्टदेवतामिवापश्यत्.

तदानीं सा संयोगिता तं रतिविरहितमेकाकिनमेव समागतं मदनं मन्यमाना लज्जया किमपि स्वागतं विधातुं नो प्राभवत् केवलमुत्थाय तिष्ठंत्याः स्वसख्याः संयोगिताया मनोगतं जानन्ती सा कर्णाटकी दासी सत्वरमग्रेसमुपसृत्य ' सुस्वागतं महाराजस्य पृथ्वी-

राजस्य ' इत्युक्त्वा तं हस्तेधृत्वा कांचनमये महासने समुपावेशयत्. संयोगितामपि रोषादनिच्छंतीमिव बलादानीय तत्समीप एव न्यवेशयत्.

अथ लज्जानुरोधाद्वा कन्यासमयपालनाद्वा मूकवत्तिष्ठन्तीं राजकन्यां वीक्ष्य सा दासी पुनरपि स्वयमेवावदत्. पृथ्वीराज ? सामन्तचक्रवालाधिपते ! इयं हि कनोजाधिपस्य जयचंदस्य कन्या संयोगिता नाम त्वदनुरागमयी दुष्टेनाहंमन्येन मदनेनेदृशीमवस्थां प्रापिता. वयं च सर्वाअपि दास्योऽस्या ईदृशीमवस्थामवेक्ष्य नितान्तचिंताव्याकुला अभवाम. संप्रति परमेश्वरकृपया त्वां समागतं वीक्ष्य कृतार्थाः सर्वथा वयमनुगृहीता इति.

तदानीं च सा संयोगिता कोकिलकूजितानुकारिणा स्वनेन ' सखि ! युष्मदपेक्षयाऽहमेव सर्वथ महाभागेनानुगृहीताऽस्मि ' इत्यवदत्. तानि चामृतमयानीव वाक्यानि श्रवणपुटाभ्यां निपीय सन्तुष्टान्तःकरणः प्रफुल्ललोचनं आनन्दातिरेकोल्लसन्मानसः सरभसमाह. प्रिये! मया समागतेन न त्वमनुगृहीता नापि त्वदीया चातुर्यखनिरियं दासी, किंतु स्वयमात्मैवानुगृहीतः, यद्यपि चिरात्खल्यहमस्यां त्वत्सहचर्यां बद्धानुरागस्तथापि कार्यानुरोधाद्वा कनोजाधिपकोपभयाद्वा नागन्तुं प्राभवम्. तदर्थं क्षमादानेनायं दासोऽनुकम्पनीय इति.

( ३ )

अथ कालयापनं वृथा मन्वाना संयोगितया स्वनेत्रसंकेतेन सूचिता सा कर्णाटकी दासी प्रगल्भा सस्मितं जगाद--राजन् ?

यद्यपि युवयोः परस्परमनुरागः प्रत्यक्षएव. तथापि सखीस्नेहो मां वाचालयति–इयं सत्यमेव त्वदर्थं पितृकोपपात्रतां लब्ध्वाऽत्यन्तं दुःखान्यसहत. तथापि लोकमर्यादाऽस्माभिः पालनीयैव. अन्यथा खलोऽयं लोकः शुद्धमनुरागमपि अन्यथा भावयते. नहि त्वदनुराग-वशाऽपीयं स्वपितृकुलं कलंकयितुमिच्छति. तस्मादियं नः सखी त्वया गान्धर्वेण विवाहेन विवाहनीया. पश्चाच्च लौकिको विवाहो-त्सवो यथावसरं विधेयः. बह्व्यो हि राजर्षिकन्यका अनेन विवाहेन महद्भिः पराक्रमशालिभिर्भूपालैः स्वीकृता एव. तत्कृपया त्वं गांधर्व-विवाहसामग्रीसंपादनार्थमनुमोदस्वेति.

राजाचेमाममृतवाणीं निशम्य परं सन्तुष्टः सानन्दमाह. भद्रे! अवश्यं भवतीभिः स्वसखीकल्याणं चिन्तनीयं. सखि! यत्त्वं गांधर्व-विवाहविषयेऽवदस्तत्सर्वं तथैव नात्र संशयः. अहं तु मन्ये यदा च प्रियया स्वमनो मह्यं समर्पितं तदैव मयाऽपि तद्गृहीतं. तेन च तदानीमेवावयोर्विवाहः संवृत्तः. विवाहोनाम परस्परमनुरक्तयोर्यूनोः कयापि नियमरीत्या संमेलनं. तच्च वैदिकरीत्या वाऽवैदिकरीत्या वेत्यन्यदेतत्. एषा रीतिश्च गौणी, विवाहे मुख्यं कारणं परस्परानुराग एव. स चेद्विद्यते तदा लोकलज्जारक्षणार्थं लौकिकी रीतिः करणीया. स चेन्नास्ति तदा केवलेन लौकिकेन विवाहविधिनाऽनुरागो नोत्पद्यते. तद्यथा युष्माकमभिमतं तथैव भवतु. अहं च सर्वथा युष्माकं युष्मत्सख्याश्च वशंवद इति ज्ञातव्यमिति.

इमां चानुमितिं लब्ध्वा कृतकृत्या सानन्दा सा दासी त्वरित-मुत्थाय सर्वं विवाहसाहित्यं–द्वे महत्यौ पुष्पमाले, कुंकुमं, नीराजन-

मित्यादिकं गृहीत्वा महत्या त्वरया समाययौ. सा च प्रथमं महति हेमासने पृथ्वीराजं समुपावेशयत्. तदाभिमुख्ये च संयोगितां. ततश्च संयोगिताहस्ते मालां दत्वा—'इमां मालां मदीयहृदयेन समं सदा प्रज्वलितं मदनाग्निं साक्षीकृत्य त्वत्कण्ठे समर्पयामि. इयं च मदीयं हृदयं तव हृदयेन समं मेलयंती चिरं तिष्ठतु' इत्युच्चारयित्वा पृथ्वीराजकंठेऽदात्.

पृथ्वीराजोऽपि स्वयमेव द्वितीयां मालां गृहीत्वा—मदीयं हृदयं त्वयि कियंतमनुरागं बिभर्तीति ज्ञानायानया मालया समं प्रेषयामि. तच्च यावच्चंद्रदिवाकरं कोमलेऽनुरागपरिपूर्णे प्रियाया हृदय एव तिष्ठतु—इत्युक्त्वा संयोगितायाः कण्ठे मालां समर्पयत्. संयोगिताऽपि स्वप्रियकरस्य पृथ्वीराजस्य भाषणं समाकर्ण्यात्यंतं संतुष्टाऽत्मानं कृतकृत्यं मेने.

अथ सा दासी तावुभौ सुवर्णमये पात्रे भोजनार्थमुपावेशयत्. तावपि महता मोदेन रुचिरपक्वान्नग्रासान् परस्पराभ्यां वितीर्य स्वानुरागं प्रकटीचक्रतुः. विरचितभोजनौ तौ ताम्बूलमादाय स्वस्वस्थाने तिष्ठन्तौ विविक्ततालाभार्थं सा दासी जगाद. सखि! तावदत्र तिष्ठ! अहं च यावत्सारिकया सहेमं शुकं मेलयित्वाऽगच्छामीति. तामपसृतां वीक्ष्य खिन्नामिव तां स्वप्रेयसीं चतुरः पृथ्वीराजः स्वांकमारोप्य शनैः शनैस्तद्भयमपनीय नानाविलासांश्चक्रे.

( ४ )

अथ संप्रवृत्ते कुक्कुटारावे, प्रज्वलिते प्राग्दिशाया मुखे, अस्ताचलशिखरसंगते रात्रीपतौ, सूर्यप्रवेशजवनिकायामिव संध्यायां

सर्वत्र प्रसृतायां, लुप्तासु तारासंहतिषु, दिनकरागमननिवेदनार्थं सर्वतो धावमानेषु विहंगमेषु, रात्रिजागरणरक्ततरनेत्रेषु निरीक्षणसेवकेषु, प्रलुप्यमानतेजस्केषु प्रदीपगणेषु, प्रभातकालिकेन मन्दवातेन प्रबोधितः पृथ्वीराजो दूरतो वीराणामाक्रोशांस्तथा वाजिनां हेषारवानशृणोत्. स च तदानीं स्वसेनायाः सामन्तमण्डलस्यच वृत्तमविज्ञाय नितान्तं खिन्नः सत्वरं जिगमिषुः प्रियाया गमनाज्ञाग्रहणार्थं ययौ. सा च सकलनिशायां विलसनाखिन्ना प्राभातिकमरुता कपोलयोश्चुम्बिता किंचित्सुष्वाप. तां च प्रसुप्तां समीक्ष्य निद्राभंगभीतस्तथैव तस्थौ.

अत्रान्तरे किलकिलानामिकायाः शतघ्न्या ध्वनिं महान्तमाकर्ण्य संभावितहानिः सत्वरमेव प्रयासुस्तामतिगाढमालिलिंग. आश्लेषनष्टनिद्रा सा संयोगिता स्वकान्तं पृथ्वीराजं चिरादेव जाग्रतं मन्वाना 'किमिति निद्रा नागता' इति प्रपच्छ. स च सर्वं वृत्तं निवेद्य गमनानुज्ञामयाचत. सा च वियोगदुःखाकुला दुःखाश्रुपरिपूर्णनेत्रकमला पुनरपि रात्रावागमनवचनं गृहीत्वाऽनुज्ञां ददौ. महता कष्टेन च तस्मात् संयोगिताहृदयादिव तस्माद्भवनान्निर्गत्य स्वाश्वसमीपमाययौ. आगत्य च तस्मिन् तमश्वमारोहति सति निष्कोशासिलताधारिभिर्महंमदीयैर्निरीक्षकैः संशयादाक्रान्त एव. पृथ्वीराजोऽपि युद्धकुशलस्तानाक्रम्य स्थितानवलोक्य स्वासिमपि निष्कोषीकृत्य तथाऽयुद्धत यथा ते सर्वेऽपि यवनाः स्वस्वलोकं जग्मुः.

अथ स्वप्रियकरं रक्षकैराक्रान्तं युध्यमानं प्रेक्ष्य चिन्तातुरायाः प्रियायाः संयोगितायास्तं विजयिनं दृष्ट्वा सन्तुष्टाया विजयपारितो-

षिकमिव स्मेरवदनदर्शनं कटाक्षपात गृहीत्वाऽतिजवेन स्वसेनानिवेशं प्राप. तत्र च जयचन्दसेनासागरं निर्जित्य पृथ्वीराजादर्शनेन चिन्तातुरान् सकलान् सामन्तान् वीक्ष्य समतुष्यत्. स्वपितृव्यस्य कह्नचह्वाणस्य पादयोरपतत्.

स तु वृद्धः स्वभ्रातुष्पुत्रं राजाधिराजं पृथ्वीराजं कुंकुमतिलकांकितभालप्रदेशं विवाहकंकणमंडितकरं वीक्ष्य विस्मितः सहासमपृच्छत्. राजाधिराज ! किमिदं ! कुतः संपादितमिदं कंकणं कुंकमतिलकश्च ! मन्ये संयोगिताहरणमनुष्ठितमत्रभवताऽऽयुष्मता. यदि सत्यमेव कनोजाधिपकन्या विवाहिता तदा तां पुनरपि ब्राह्मण इव वा वैश्य इव वा श्वशुरगृह एव त्यक्त्वा कथमागतः ! इति. पृथ्वीराजोऽपि संभूतं सर्वं वृत्तं निवेद्य कनोजाधिपेन सह युद्धप्रसंगे निश्चितकल्पे प्रत्यवायो माभूदिति मन्यमानेन मया नानीता सेति जगाद.

अथ सर्वेऽपि सामन्ताः सर्वमपि स्ववृत्तं निवेदयामासुः. तत्र लंगडीरायस्य निरतिशयं शौर्यं तथा तद्वधं च निशम्य पृथ्वीराजोऽपि परं दुःखायतेस्म. ततश्च दुःखं विहाय पृथ्वीराजः सर्वानपि स्वसामन्तांस्तथा स्वपितृव्यं कह्नचह्वाणं किंकर्तव्यमित्यपृच्छत्. ते सर्वेऽपि- पृथ्वीराजेन संयोगितां गृहीत्वा दिल्लीनगरं प्रति गन्तव्यं. अनुधावतश्च कनोजाधिपस्य सैन्यं स्थाने स्थानेऽवस्थितैरस्माभिश्चाक्रम्य पराजेयं. सर्वथा वयं यथाशक्ति जयचन्दसेनां प्रतिबन्धन्तः पृथ्वीराजं दिल्लीगमने साहाय्यायिष्याम इति.

पृथ्वीराजश्च—वयं सर्वेऽपि मिलित्वा जयचन्देन समं युध्वा तं पराजित्य सोत्सवं संयोगितां दिल्लीनगरं नेष्याम इति प्रत्युवाच.

अथ दिल्लीनगरगमने सर्वेषामेवाग्रहं समीक्ष्य पृथ्वीराजः स्वमतं विहाय तन्मतानुवर्ती बभूव.

ततः सर्वानपि सामंतान् सेनया समं स्थाने स्थाने कनोजाधिपप्रतिबंधार्थं संस्थाप्य पृथ्वीराजः सूर्यमस्ताचलगतं प्रतिपालयामास. ततश्च सकलदिनकर्मसाक्षिणि, अखिलभवनसंक्रमणश्रांत इवापरदिक्प्रेमाकृष्ट इव भगवति मरीचिमालिनि अस्ताचलशिखरेषु स्वपादान्निवेशयित्वा शनैः शनैरवतरति सति, प्रकाशेऽपि स्वस्वामिमार्गानुसरणं कुर्वति सति, सर्वेषु विहंगमगणेषु स्वस्वकोटराभिमुखं धावत्सु सत्सु, अन्धकारेऽपि विवेकविधुराण्यज्ञजनान्तःकरणानीव प्रदीपप्रकाशहीनानि गृहाणि प्रविशति सति, सर्वसामन्तैः समं विरचितसंध्योपासनः पृथ्वीराजः स्वाश्वसन्नाहार्थं सेवकमादिशत्.

अथ समुदिते पूर्वदिशो धमिल्लगते कमल इव, रजतकुंभ इव, कन्दुक इव, फेनपुंज इव, जातीकुसुमस्तबक इव मृगलांछने, राजपुरुषैरिव तत्करैरज्ञानमिवान्धकारमपनीय प्रदर्शितेषु न्यायमार्गेष्विव गमनमार्गेषु, सर्वत्रपतितां शारदीं पूर्णिमाज्योत्स्नां संयोगितया प्रेषितां सखीमिव मन्वानः सः सानंदमश्वमारुह्य समं सर्वैः स्वसामन्तैर्जवेन तन्मंदिरं प्रति प्रचचाल.

संयोगिताऽपि स्वप्रियकरस्य वचनमनुस्मरन्ती चंद्रोदयदर्शनप्रक्षुब्धानंगसंतप्तोपवनसमीपं वातायने तिष्ठंती तदागमनमार्गासक्तदृष्टि-

रविरतमतप्यत् यथायथा च वेलायतेस्म पृथ्वीराजस्तथा तथा नाना-निष्टकल्पनाकुलमतिः सा राजकन्या संयोगिता स्वनेत्रकमलाभ्यां सततमश्रुमुक्तासंततिं मुमोच.

अत्रान्तरेऽश्वस्य रवं श्रुत्वा संप्राप्तचेतना स्वप्रियकरं प्राप्तं वीक्ष्य नष्टखेदा सत्वरं धावमाना तमानयितुं तामेव दासीं प्रेषयामास. अन्याश्चोपहारस्य, शय्यागृहस्य, क्रीडागृहस्य, स्नानगृहस्य, सन्नाहे-ऽत्वरयत्. सा च दासी पुरतो गत्वा पृथ्वीराजं तत्सहायांश्चानयत्. संयोगिता च पृथ्वीराजेन सह समागतान् दश पुरुषानवलोक्य चिंता-क्रांता भीतिविह्वलाऽभवत्. पृथ्वीराजश्च तदवस्थामवेक्ष्य स्वयमेव सर्वं वृत्तमवदत्. प्रिये ! एतानकस्मादगतान् वीक्ष्य त्वं शंकिष्यसे परन्तु नेते परकीयाः किंतु मदीयाः सहाया एव. एते च पितृव्यचरणास्तव श्वशुरा एवेति. स्वप्रियस्येदं भाषणं निशम्य लज्जाकुला सा तस्मै कह्नचव्हाणाय परमविनयेन नमश्चक्रे.

अथ सर्वेषां तेषां सामन्तानां सेवासु स्वदासीर्नियुज्य स्वयं पृथ्वीराजेन समं विलासमंदिरं प्राप्तां तां प्रियकरीं पृथ्वीराजोऽवोचत् —प्रिये ! अद्य खलु त्वया सहास्मिन्विलासमंदिरे विलसितुं नागतः किंतु त्वां स्वराजधानीं दिल्लीनगरं नेतुं. अस्मिन् कर्माणि च मम सहाया एते सर्वेऽपि सामन्ताः. तत्किं मन्यसे त्वमिति.

सा चेमां वाचं निशम्य विस्मिता प्रथममुपहासमेव मेने. ततश्च पृथ्वीराजेन भूयोभूयो निवेदिताऽवदत्—प्राणेश्वर ! इमे प्राणाः पूर्वमेव युष्मच्चरणयोरर्पिता एव. पुनरपि भवद्भिः स्वयमागत्य सार्थकी-

कृताः. तथापि अविचार्य यत्किंचिदनुष्ठितं पश्चात्पश्चात्तापं सूते. प्रसिद्धं खलु भवद्भिः समं मम पितुर्वैरम्. स च राजसूययागे विघ्नविधानेनात्यन्तं संतप्तो वैरनिर्यातनसमयं प्रतिपालयति. यद्यपि भवन्तोऽपि न बलतो वा शौर्यतो वा सम्पत्तितो वा गुणतो वा न्यूनास्तथापि मम पिता सेनाबलाढ्यएव. स च युष्मभिरपहृतां स्वसुतां निशम्य क्रोधान्धः ससैन्यमनुधावेच्चेत्तदा महदनिष्टं स्यात् तस्माद्यूयं दिल्लीनगरं गच्छत. मां च गांधर्वविवाहेन व्यूढां निशम्य क्रुद्धोऽपि जनलज्जाभयादवश्यमेव युष्मदान्तिकं प्रेषयिष्यति. तदनायाससाध्येऽस्मिन् कर्मणि किं साहसविधानेनेति.

पृथ्वीराजस्तु तस्या इदं भाषणमाकर्ण्य साविचारमभाषत. राजकन्ये? यो हि तव पिता त्वां गृहीत्वा गच्छतो ममानिष्टं कुर्यात् स मया व्यूढां त्वां निशम्य तवानिष्टं न कुर्यादिति कथं खलु श्रद्धाहम्. त्वदनिष्टे जातेऽहं तु न जीवामि. तदनयोरुभयोरावयोर्जीवयोर्मध्ये कं विहाय को वा नेय इति न जानामि. तद्यद्भावि तद्भवतु. आवां सहैकत्रैव तिष्ठावः. तत्र यद्यनिष्टं वा स्यादिष्टं वा तदुभयोरेव स्यादित्यहं मन्ये. किंच यद्यपि तावत्तव पिता सेनयाऽधिकबलस्तथापि मदीयसामन्तान् स न पराजेतुं शक्नोति. स तु कोपेनानुधावमानो मदीयैः सामन्तैः स्थाने स्थाने आक्रम्य क्षपितबलो भग्नदन्तो नाग इव न किंचित्कर्तुं पारयेत् इति.

अत्रान्तरे वृद्धः कन्हचव्हाणः सावेशं जगाद—वत्से ? संयोगिते ! कामपि चिन्तां मा कुरु. त्वदीयः पिता कोपाकुलस्तव पतिं

बन्दीकर्तुमनुधावेच्चेदस्मान्निहत्यैवाग्रे गच्छेन्नान्यथा. तद्यथा पितरं त्यक्त्वा स्वेच्छया दिल्लीपतिर्वृतस्तथैवेदानीं दिल्लीगमनाय सन्नद्धा भवेति. अन्ये सामन्ता अपि तथैवावदन्. तदानीं साऽपि संयोगिता भर्तुर्देवताया इवाज्ञां शिरसा स्वीकृत्य दिल्लीनगरगमनार्थं सन्नद्धाऽभवत्.

# नवमो गुच्छः।

१ संयोगितापृथ्वीराजयोः प्रयाणम्.

२ जयचन्दस्य पृथ्वीराजानुधावनम्.

३ आततताईकहरकण्ठीरयोः संग्रामे पतनम्

४ उभयसेनयोस्तुमुलं युद्धम्.

( १ )

अथ दिल्लीनगरगमनार्थं कृतनिश्चया सा राजकन्या संयोगिता प्रथमतः स्वीयं परमप्रेमास्पदं सखीमण्डलमपृच्छत्. तच्च स्वसख्या मनोरथस्य साफल्यमवलोक्य संतुष्टं रतिमन्मथयोरिव सर्वथाऽनुरूपयोः संयोगितापृथ्वीराजयोर्विलासान् द्रष्टुं बद्धकुतूहलं तां संयोगितावियोगवार्तामकस्मात्समागतां निशम्य विस्मितं मुहूर्तं नष्टचेतनमिवाभवत्. ततः कथमपि महता विवेकेनावधूतशोकं तत्र संयोगितायाः मुखं विलोक्य स्वदुःखमजहात्. विज्ञापयास च सखि!

पूर्वार्जितैः सुकृतैस्त्वं द्वितीयं मन्मथमिव सुंदरं पुरंदरमिव प्रतापशालिनं सम्राजं पृथ्वीराजं पतिमलभथाः. त्वं च दिल्लीपतेः शचीवेन्द्रस्यार्ध-भागिनी संवृत्ता. तदिममैश्वर्यातिशयं प्राप्यास्मान् मा विस्मर ! वयं तु भवत्या विस्मृता अपि रात्रिंदिवं सीतापतिं त्वत्कल्याणायैव प्रार्थ-यिष्याम इति.

राजकन्या संयोगिताऽपि चिरसहवासिनीनां सखीनां वियोग-दुःखेन व्याकुला तासां प्रेममयीं पाथेयमिव विज्ञप्तिमाकर्ण्य संतुष्टाऽश्रु-परिपूर्णनेत्रकमला सादरं सर्वा अपि परिष्वज्य सगद्गदमवदत् –सख्यः ! अहं च यद्यप्यधुना दिल्लीपतेरंशभागिनी संवृत्ता तथापि आत्मानम् युष्माभिः समं नानाविधक्रीडारतां कनोजपतेः कन्यामेव भावयामि. ये खलु संपत्तिं विपत्तिं च नदीप्रवाहस्य वृद्धिक्षयाविव स्वावस्थां मन्यंते न ते कदापि स्वात्मानं स्वकीयान् वा विस्मरन्ति. ये तु हीनमतयः संपदागममदोन्मत्तास्ते स्वात्मानमेव विस्मरन्ति तदा च का कथा स्वकीयानां स्मरणस्य. सख्यः ! तावत्कालमेव भवतीभिर्मदीयं दुःखं सह्यं यावन्मम भर्तरि पृथ्वीराजे वर्तमानस्तातस्य कोपो न शाम्येत्. शान्ते च तस्मिन्नहं युष्मान्दिल्लीनगरं समानाययिष्यामीति.

अथ राजकन्या कथमपि तासामनुज्ञां गृहीत्वा स्वदासीमण्डल-मापृष्टुं समागच्छत्. तच्च दयालुस्वामिन्या वियोगदुःखेन व्याकुलं सततनिपतदश्रुजलबिन्दुनयनोत्पलं सर्वमपि गमनसन्नाहमकरोत्. राज-तनया संयोगिताऽपि तत्समावस्था धैर्यं समवलंब्य जगाद—दास्यः ! अद्यारभ्याहं युष्मद्वियुक्ता भविष्यामि. अहं यथाशक्ति शीघ्रमेव

तातं प्रसाद्य सर्वा अपि युष्मान् मम भर्तृगृहं नेष्यामि. तावत् अत्रैव प्रसादे निवसन्त्यो भवत्यो मदीयं प्रियवस्तुजातं पालयन्तु. इदं च सारिकाशुकामिथुनं कदापि नोपेक्षणीयम्. अयं च मनुष्यवत् सकल-कर्मकुशलो वानरः समय एव भोजनीयः. अयं च स्वयं मया वर्धितो मयूरो नान्यहस्तेन जलं पिबति अन्नं वा भक्षयति, तथापि मम प्रिय-भगिनीव कल्याणदक्षा कर्णाटकी द्वितीयं जीवितमिवेमं पालयतु. अयं च सारिकाक्रीडापटो यत्नेन रक्षणीयः. एतेनाद्यापि नाहं भर्त्रा सहाक्रीडम्. वयं च सर्वा मिलित्वा प्रियकरेण नाथेन समं क्रीडि-ष्यामः. एषा च वीणा प्रियवादिनी सखीव शोकसमये प्रियालापै-र्मदीयं शोकमपनयन्ती समतोषयत्. साऽपि सावधानेन रक्षणीया. अस्याः साहाय्येन प्रणयकुपितं प्राणनाथं स्ववशं कारिष्ये. एषा च जातीलता कुसुमस्तबकाच्छादिता वराकीहैव तिष्ठतु. आसीन्मे मनसि परं यदस्याः सुकुमारैः कुसुमैर्नानाविभूषणानि कृत्वा तैः प्राणप्रियोऽलंकरणीय इति. अस्तु. यदा च तातस्य कोपो विनं-क्ष्यति. तदा समये समये तेनाहूता प्राणनाथेन सममागत्यैनामपि संभावयिष्ये. एतच्च क्रीडासरो मद्वियोगदुःखादिव मीनपरिवर्तनो-त्थतुषारक्षेपव्याजेनाश्रूणि मुंचति. तदिदमपि संभाविष्यत्सत्कारं साव-धानेन मनसा रक्षणीयम्. एनां च मत्प्रियकरस्य प्रतिकृतिं परं प्रेमास्पदं नानाशोकसमयेषु धैर्यदायिनीमहं सह नेष्यामि. यद्यपि सति प्राणनाथे नास्ति तत्प्रतिकृतेरावश्यकता तथापि कृतज्ञाऽहं प्राणात्ययेऽप्येनां न विस्मारिष्यामि. दोषभाक्च न भविष्यामि.

एवं सर्वं व्यवस्थाप्य गृहीतसर्वानुज्ञाया अपि संयोगितायाः पादयुगुलं तस्मान्निवासात् सहसा निर्गन्तुं नाशकत्. यद्यपि सा स्वयंवृतेन हृदयवल्लभेन समं गन्तुमुत्सुकैवासीत्तथापि कन्यायाः पितृगृहमोहो बलवत्तरएव. स चैनामस्मिन् समये स्ववशां चक्रे.

अथ वेलायमानां स्वकान्तां संयोगितां वीक्ष्य पृथ्वीराजः पुनरपि जगाद—प्रिये ! निर्गमनवेलाऽतिक्रामति. अस्माभिश्च सूर्योदयात्पूर्वं महान् पंथा आक्रमणीय एव. अन्यथाऽनुधावंस्तव पिताऽवयोरनिष्टं कुर्यात्. यद्यपि अत्र चिरं वसन्त्यास्तव वियोगदुःखं दुष्परिहरं तथापि मदर्थं त्वया यदा स्वजनकस्नेहोऽपि समुज्झितस्तदाऽस्य स्थानस्य तद्वर्तिनां वस्तूनां स्नेहत्यागे का क्षतिः. तत्क्षणिकामिमं मोहं विहाय मया सह गन्तुं सन्नद्धा भवेति.

बुद्धिमती संयोगिताऽपि स्ववल्लभस्येदं भाषणमाकर्ण्य निर्धूतमोहपटला सत्वरं स्वदासीमश्वमानेतुमादिदेश. पृथ्वीराजश्चाश्वानयनोद्यतां तां दासीं प्रतिषिध्य संयोगितामवदत्—प्रिये ? गच्छतोरावयोर्मार्गे विघ्ना अवश्यं भविष्यन्ति. तदस्मिन् समये भिन्नमासनमनुचितं. यत्खलु इष्टं वाऽनिष्टं वा स्यात्तदुभययोरेव स्यान्नैकस्य. मार्गे चातिवेगेन धावता मया सह त्वं धावितुं न शक्ष्यसि. तद्विरम भिन्नाश्वारोहणव्यापारात्. त्यक्त्वा च लज्जां मम पृष्ठत एनमेवाश्वमारुह. एष मम विश्वासपात्रं कुलीनोऽश्वः शीघ्रमेवावां स्वराजधानीं नेष्यतीति. साऽपि संयोगिता युक्तमेवेदमिति मन्यमाना दासीजनस्य प्रणामान् गृहीत्वा तस्मै नानाविधं पारितोषिकं वितीर्य स्वकण्ठगतां

मुक्तामालां कर्णाटकीकण्ठे निक्षिप्यागदत्–सखि ! त्वयैव खलु अहं दिल्लीपतेः सहचारिणी कृता. त्वयैव च मम प्राणवल्लभोऽपि प्रत्युज्जीवितस्तत्तुभ्यमहं किं पारितोषिकं ददामि. अयं देहोऽपि यदा नास्य जनस्य तदा राज्यादीनां का वा कथा ! तत्केवलं मम स्मरणार्थमहमिमां मद्वत्तां मुक्तामालां त्वत्कण्ठे स्थापयामि. इमामेव मालां मां मन्वाना अस्याश्च तरलं द्वौ विभागौ यथाक्रमं मदीयं हृदयं हस्तौ च मन्यमाना कथमपि मदीयं वियोगदुःखं सहस्वेति. ततश्च प्रथममारुढेन पृथ्वीराजेन दत्तहस्तावलंबा तस्य पृष्ठभागेऽश्वमारुरोह. पृथ्वीराजश्च परमसूक्ष्मेण कौशेयवस्त्रेण परस्परमबध्नात्. तौ च तदानीं श्वेतमश्वमारुढौ वस्त्रेणाभिन्नतां गतौ महोक्षारूढौ पार्वतीशंकराविवाशोभेताम्.

अथ दिल्लीपतिः कालयापनं वृथाऽयोग्यं भयावहं च मन्यमानः समीपवर्तिनं चंदकविं–कविराज ! मद्वचनात्स राजा जयचंदस्त्वयेत्थं वक्तव्यः–'कनोजाधिपते ! तव भ्रातरं निहत्य त्वदारब्धो राजसूययज्ञोऽपि मया विघ्नित एव. अधुना मयि स्वयमनुरक्तां तव कन्यां हृत्वा त्वदीयं यशइव श्वेतमश्वमारुह्य पृथ्वीराजोऽयं स्वराजधानीं गच्छति. तद्यद्यस्ति शक्तिस्तदाऽनुधाव्य मां बन्दीकुरु अन्यथा स्ववदनमपमानमलिनं गृहीत्वा तूष्णीं तिष्ठेति ! निगद्येत्थमश्वरश्मीञ्जग्राह. सोऽप्यश्वः स्वामिनियोगं शिरसाकुर्वाणः सत्वरं दिल्लीनगरमभिलक्ष्य प्रतस्थे.

( २ )

अथ रात्रीपतिः पृथ्वीराज इव स्वपत्नीं संयोगितामिव रात्रीं गृहीत्वा स्वनिवासमगच्छत्. सर्वा अपि तारकाः संयोगितादास्य इव स्वस्वामिनीवियोगदुःखाकुलाः प्रासादइवाकाशे लीना अभवन्. सर्वेऽपि पक्षिणो जयचंदाय कन्याहरणं कथयन्त इव सर्वत्र व्यचरन्. पृथ्वीराजमार्गप्रदर्शनार्थमिव भगवान् सविता पूर्वाचलमारुरोह. सर्वेऽपि प्रजाजना अविदितरात्रिवृत्ता यथानियमं स्वस्वव्यापारमन्वतिष्ठन्.

तदानीं कविराजश्चन्दः स्वीयमाह्निकं सर्वं विधाय देवीं भगवतीमुपास्य कनोजाधिपस्य दर्शनार्थमगच्छत्. राजा च तदानीं राजसभायां स्थित्वा राजकार्याणि सामन्ताहृतान्युपायनानि अपश्यत्. चंदकविश्च स्वसेवकाद्वारा स्वागमनं राज्ञे कथयितुं द्वारपालाय न्यवेदयत्—सोऽपि श्रुततत्कीर्तिर्विज्ञातराजस्नेहः सहसा गत्वा तदागमनं निवेदयामास. राजा जयचंदोऽपि कविराजस्य प्रातरागमनकारणं जिज्ञासमान्योऽप्यन्ततोऽलब्ध्वा सचिन्तः शीघ्रमेव तत्प्रवेशनार्थमादिदेश. सोऽपि द्वारपालः सत्वरमागत्य कविराजं प्रवेशयित्वा राजदर्शनमकारयत्. जयचंदोऽपि सादरं विहितसत्कार उच्चासने तं निस्पृहं चन्दकविमुपावेशयत्. चन्दकविश्च संप्रदायानुरूपं शुभैराशीर्वचनैस्तं कनोजाधिपतिमनुजग्राह. कनोजाधिपश्च वृत्तकुशलप्रश्नः सादरमपृच्छत्--कविश्रेष्ठ! अयं च समयो भवतो भगवतीसेवायाः! तदद्य कथं भगवत्युपासनानुष्ठानं विहाय भवान् प्रातःकाल एव मम सभामलमकरोत्! इति.

चन्दकविरपि स्वागमनकारणं शनैःकथयितुमिच्छुराह. राजन्! यद्यपि मे भगवत्युपासनमतिरोचते तथापि नित्यव्यवहारार्थं स्वामी दिल्लीपतिः सेवनीय एव. अस्तु. स च प्रतापी सकलभूपालचूडामणिः पृथ्वीराजो चन्द्रज्योत्स्नाधवलितायामतीतायां रात्रौ मामाहूयावदत्.— कविश्रेष्ठ! त्वं महति प्रत्यूषे राजसभां गत्वा मद्वचनाद्राजानं जयचन्दं ब्रूहि—त्वदीयां कन्यां गांधर्वविवाहविधिना विवाह्य तामद्य गृहीत्वा दिल्लीनगरं गच्छामि. तद्यद्यस्ति शक्तिस्तदाऽनुधाव्य मां बंदीकुरु इति. राजन्! मया तु स्वामिनियोगोऽनुष्ठितः, इदानीं किंवा कर्तव्यमिति त्वं विचारयेति. कनोजाधिपश्च श्रुत्वाऽमुं वृत्तान्तं विस्मितः परिहासमेव मेने. परन्तु कविराजेन सशपथं सत्यत्वेन निवेदितं तमाकर्ण्य कोपातिरेकेण सद्यएव मुमूर्च्छ. तं मूर्च्छितमवलोक्य सर्वेऽपि सामन्तास्तथापरिचारकाश्चेतस्ततो धावमानाः शीतलोपचारैः संज्ञां लंभयित्वा सान्त्वयामासुः.

जयचंदस्तु स्वप्रकृतिमापन्नः प्रथमतः संयोगिताप्रासादरक्षकाणामधिकारिणं राजपुरुषमाव्हयतिस्म. स च परिचारकस्तं सैनिकनिवासमध्ये मृग्यन्निदं वृत्तमानिनाय—दिनद्वयात् पूर्वं यथानियमं स्वानुचरैः समं संयोगिताप्रासादं निरीक्षमाणः स राजपुरुषोऽकस्मादेव तस्मात्प्रासादान्निर्गतं तरुणं पुरुषमवलोक्य विस्मितस्तं बन्दीकर्तुं प्रयतमानः सानुचरस्तेन निहतः स्वर्गं जगामेति. कविराजश्च तद्वृत्तं निशम्य स्मेरवदनः कनोजाधिपं जगाद—राजन्! स च तरुणः कोवेत्ययं न जानाति. अहं तु जानामि स च तरुणः पृथ्वीराज एव. यदा च संयोगितामंदिरं प्रविश्य तां गांधर्वविवाहेन

स्वीकृत्य चिरं विलस्य प्रभातकाले स्वनिवासं गन्तुं निर्गतस्तदा स एकाकी निरीक्षकाध्यक्षेण समं युध्वा सर्वानपि तान् यमालयातिथी-नकरोत्. इति.

निशम्य च स्वसेवकघातं तथा स्वदुहितृहरणं राजा जयचन्दः कोपसंतप्तः सेनापतिमाहूय--सेनापते! अहं च मध्यान्हेऽद्यैव तं कन्याचौरं पृथ्वीराजमनुधाव्य बंदीकर्तुं निर्गच्छामि. तत्सर्वां सेनां सन्नाह्य त्वमपि मया सहागच्छेत्यादिशत्. सर्वान् सामन्तानपि तथैव न्यवेदयत्.

अथ कथमपि स्नातभुक्तः जयचन्दः सेनापतिनिवेदितसेना-सन्नाहो महत्या त्वरया सामन्तमण्डलवृतस्तं पृथ्वीराजमनुदधाव. तं च स्वजामातुः शासने समुद्यतं जयचंदं वीक्ष्य कोपाकुलो भगवान् सहस्ररश्मिः प्रखरैः किरणैः संतापयामास. वातश्च रविसंतापसंतापितः प्रतीपं वहन् सैनिकान् सामन्तानत्यन्तं क्लेशयामास.

गृध्रादयो मांसलोलुपाः पक्षिणश्च भयसूचकैः शब्दैस्तमस्मा-द्व्यापारादुपरन्तुं बोधयन्त इव सेनां परितो विचेरुः. जलाभावात्तृ-ष्णासमाकुलाः सैनिका रविसंतापमसहमाना भूमितले निपत्य प्राणान्विससर्जुः. अन्ये च बलवता प्रखरसूर्यसंतापेन संतप्ता रुग्णा एवाभवन्.

एवं स्वविरोधीनि पंचभूतान्यवलोक्याऽपि अखिन्नः कोपाति-रेकप्रनष्टमतिस्तथैव महता जवेनानुदधाव.

अथ तदापतत्-अग्रेसरमत्तेभराजिसंकुलं, असंख्यदुर्दांतवाजिह्रेषारवव्यापृतं, प्रतिफलितसूर्यप्रकाशदुर्दर्शभल्लभीषणं, सकलमध्यभागविराजमानखड्गलतिकाभयंकरसादिकुलं, तीव्रविषदिग्धफलकबाणसंचयविराजमानं, अनेकशूरधानुष्कगणभूषितं, मध्यभागे शनैः प्रचलच्छत्रश्रीमंडलमंडितं, अनेकलोहपेटिकारक्षितकोशं, तत्पश्चादश्वशकटस्थापितभक्ष्यसंग्रहं, सेनामध्यविराजमानसेनापतिकरधृतराजवैजयंतीसुन्दरं, महागजारूढकनोजाधिपानुसृतं सैन्यमवलोक्य रोद्धुकामो 'गोविंदरायगेहलोट' नामा पृथ्वीराजसामंतः स्वसैन्यं स्वामिभक्तसैनिकभूषितं गृहीत्वा गंगाप्रवाहस्य पर्वत इव तस्य सैन्यस्य मार्गेऽतिष्ठत्. तच्चाकस्मादागतं प्रतिबंधकारणं विलोक्य क्षणमात्रं स्तब्धं कनोजाधिपसैन्यमभूत्. जयचंदस्तु प्रतिबंधकं तत्पृथ्वीराजसैन्यं वीक्ष्य क्रुद्धः सहसा तदाक्रमणाय सेनापतिमादिदेश.

गोविंदरायस्तु तं कनोजाधिपस्यागाधमनन्तं सेनोदधिं प्रेक्ष्य तद्रोध आत्मानमशक्तं मन्यमानोऽपि स्वामिहितदक्षः पृथ्वीराजस्य निर्विघ्नं दिल्लीगमने साहाय्यं चिकीर्षुर्महतोत्साहेन तेन समं योद्धुं प्रचक्रमे.

अथ सम्प्रवृत्ते तीव्रत्वेषाहतखड्गसंपातध्वनिभीषणे सावेशं युध्यमानवीरसंमर्दमनोहरे युद्धप्रसंगेऽल्पबलोऽपि गोविंदरायः कनोजाधिपसैन्यं जर्जरितमकरोत्. जयचंदस्तु तस्य शौर्यं स्वामिभक्तिमवलोक्य विस्मितः परमाभिननन्द. ततश्च तं गोविंदरायमपि स्वर्गं प्रेषयित्वा कनोजाधिपो जयचन्द्रोऽग्रे प्रयाणमकरोत्. अचिरादेव चन्द-

पुण्डीरनामा सामन्तस्तं सेनासमुद्रं प्रति प्रतीपोऽभूत्. तत्रापि बहुलं सैन्यं क्षपयित्वा तमपि निहत्य महता वेगेन जयचन्द्रोऽग्रे प्रययौ.

( ३ )

अथ क्रमेण प्रतिरोधार्थं समागतान् पृथ्वीराजसामन्तान्निहत्य ससैन्यं कनोजाधिपे जयचंद्रे दिल्लीनगरमभिलक्ष्य पृथ्वीराजमनुधावति सति परमशूरोऽतिशूरैः सैनिकैः समं ' आतताई ' नामा सामंतः पुनरपि प्रतिकूलो भूत्वा रोद्धुं मार्गेऽतिष्ठत्. वाचकाः ! अस्य सामंतस्य संबंधिनी कापि विचित्राऽऽख्यायिकाऽस्ति. सा चेत्थम्—

पुरा खलु पृथ्वीराजस्य सामंतश्चौरंगीचव्हाणनामा कोऽपि भूप आसीत्. स च परमस्वामिभक्तः स्वधर्मनिरतः सज्जन आसीत्. वह्विषु भार्यासु सतीष्वपि स चिरात्तनयं न लेभे. अथ स्वराज्ञीषु मध्ये कांचनापत्रसत्वां निशम्य सन्तुष्टो महताऽनन्देन प्रसूतिसमयं प्रत्यपालयत्. सम्प्राप्ते तु प्रसूतिसमये पारितोषिकलोभेनतस्ततो धावमानैर्मिथ्यैव कथितपुत्रजन्मा स चौरंगीचव्हाणो महता प्रमोदेन-पुत्रोत्सवमकरोत्. ततश्च ज्ञातसत्यवृत्तोऽपकीर्तिभयाच्चिन्तातुरः कथमपि तत्सत्यं वृत्तं गोपायामास. अथ गतेषु केषुचिन्मासेषु प्रवर्धमानां तां कन्यकां वीक्ष्य दुष्कीर्तिभीतः स भूपालस्तां निभृतं गृहीत्वा शंभोर्देवालयमगच्छत्. आगत्य च तां कन्यकां शंभवे समर्प्यात्मानमपि तद्बलिं विधित्सुः स चव्हाणः शंकरमध्यायत्. तस्य भक्ति तथा दृढनिश्चयं च विलोक्य संतुष्टो भक्तवत्सलः शंकरस्तां कन्यकां पुमांसं विधाय तस्मै समर्पयामास. समर्प्य च जगाद—राजन् !

अहं च तव भक्तिमालोक्य संतुष्ट एनां पुत्रमकरवम्. एष च तव पुत्रः प्रतापशाली वैभवमण्डितश्च भविष्यतीति. राजाऽपि तं पुत्रं गृहीत्वाऽऽत्मानं धन्यं मन्यमानः स्वगृहमागच्छत्. अस्तु. राजा जयचंदस्तु तं देवतानुग्रहशालिनं वीरं युद्धार्थमुपस्थितं प्रेक्ष्य प्रमारकुलोत्पन्नं कहरकण्ठीरनामानं शूरं वीरपुरुषं सेनाधिपत्येऽभ्यषिंचत्. तद्विषयिण्यपि आख्यायिकेत्थम्.

पुरा खलु प्रमारकुलोत्पन्नः कश्चन राजा संजातवैराग्यः कृत्स्नां भूमिं स्वसामन्तेभ्यो विभज्य दत्वा स्वयमात्मसाफल्यं कर्तुं वनं जगाम. तत्र च तीव्रं तपश्चरति तस्मिन् कश्चन् राक्षसो गां हत्वा भक्षयामास. धार्मिकः स प्रमारराजो गोवधपातकपरामृष्टमात्मानं मन्यमानोऽग्निकाष्ठभक्षणेन प्राणांस्त्यक्तुमैच्छत्. तदानीं च सर्वत्रसंचारी नारदमुनिस्तमग्निकाष्ठभक्षणोद्यतं वीक्ष्य परं निषिषेध. जगाद च—राजन्! त्वमसि जात्या क्षत्रियस्तुभ्यं च विप्रवदेतादृशं मरणमनुचितं. त्वया हि युद्धे सम्मुखे युद्ध्यमानं प्रतिभटं हत्वा तेन च निहतेन स्वर्गलोकः संपादनीयः. तद्विरमास्मात्कृपणादात्मत्यागव्यापारात्. अचिरादेव दिल्लीश्वरकनोजाधिपयोर्महान् संग्रामो भविष्यति तत्र च त्वं सुसमयं लप्स्यस इति. स एव कहरकण्ठीरः प्रमारराजो महतानंदेन जयचंदं सेवमानः स्ववेलामपालयत्. अस्तु.

एवं तौ द्वावपि वीरौ दैविकशक्तिसंपन्नौ महतोत्साहेन युद्धं प्रावर्तयताम्. तत्र कहरकंठीरवस्तु अगणितसेनासहायः केवलं सहस्रशङ्खवादकसमन्वितो मयूरपिच्छमण्डितशिरोभूषणधारी महता

शौर्येण पृथ्वीराजसेनापतिमाततताईवीरमाक्रम्य तदीयां सेनां द्विधाचक्रे. अन्वधावत च महता जवेन दिल्लीनगरमभिलक्ष्य.

अचिरादेव च सोऽपश्यन्महता वेगेन धावन्तौ, श्वेतेनाश्वेनोह्यमानौ भल्लखड्गधारिणौ संयोगितापृथ्वीराजौ. तौ वीक्ष्य जातानंदः स कहरकण्ठीरोऽतित्वरया पृथ्वीराजमाक्रम्य स्वहस्तगतया ज्यया तं पृथ्वीराजं कण्ठदेशआचकर्ष. साध्वी संयोगिता स्वपतिं स्वपितृसेनापतिना समाकृष्टं विलोक्य क्रुद्धा तस्मिन्नेव क्षणे स्वमध्यविराजमानां तीक्ष्णां छुरिकां निष्कास्य तया तां ज्यां चिच्छेद. कहरकण्ठीरस्तु तदलौकिकं संयोगितायाः शौर्यं पतिनिष्ठं प्रेम च वीक्ष्य विस्मितोऽनुधावनान्निवृत्तः कनोजाधिपसमीपमाजगाम. अगदच्च— राजन्! एष दिल्लीपतिः पृथ्वीराजः संयोगितां न हरति किंतु संयोगिता स्वात्मानमेव हारयति यदा च स्वकन्यैव शत्रुं साहाय्ययति तदा विजयस्याशा दुर्लभा. अस्तु. अस्माभिश्च समारब्धं कार्यं समापनीयमेवेति. कनोजाधिपश्चेदं वृत्तं निशम्यात्यन्तं समतप्यत्.

अथ पुनरपि स आततताईसामन्तः स्वसैन्यं व्यवस्थाप्य महता वेगेन कनोजाधिपसेनामाचक्राम. कहरकण्ठीरोऽपि तदाक्रमणं शौर्येण विफलीकुर्वन् युयुधे. अचिरादेव संमुखमागतौ तौ द्वावपि वीरौ स्वयुद्धचातुर्येण सैनिकानां विस्मयं जनयंतौ परस्पराघातेन प्राणं तत्यजतुः.

राजा जयचंदः प्रतापशालिनः कहरकंठीरस्य स्वर्गगतिं निशम्य खिन्नोऽपि अभग्नोत्साहः पुनरपि जवेनाग्रे प्रचचाल. ततश्चाग्रे गच्छन्तीं कनोजसेनां रोद्धुं काशीराजो नाम पृथ्वीराजसामन्तोऽग्रे-

ऽभूत्. जयचन्दपक्षीयस्तु हमीरहाडानामा क्षत्रियश्रेष्ठस्तेन समं योद्धुं पुरतो वभूव.

( ४ )

तौ च महता चातुर्येण युध्यमानौ सर्वमपि सैन्यमाश्चर्येण व्याकुलं चक्रतुः. काशीराजोऽल्पबलोऽपि युक्त्या युध्यमानः कनोजाधिपसेनामाधिक्येनानाशयत्. अचिरादेव दिल्लीनगरादागतं नूतनं सैन्यं लब्ध्वा संजातधैर्यः पुनरपि पूर्ववदेव कनोजसेनामरुणत्. कनाजोधिपपक्षीया अपि अवशिष्टाः सामन्ताः स्वस्वामिनिरोधमाकर्ण्य तत्साहाय्यार्थं तत्रैवागच्छन्. तांश्च साहाय्यविधानाय समापततो निशम्य स्वस्वामिरक्षणेच्छया पृथ्वीराजसामन्ता महता जवेन तत्र वेगेनाधावन्.

एवं समागतानामुभयपक्षीयाणां शूराणां समागमात्तत्खलु क्षेत्रं रणदेवताया मूर्तिमन्निवासस्थानमिवादृश्यत.

अथ काशीराजे स्वकर्मार्जितं लोकं गतवति सति क्रमेण हरिसिंहकनकगुर्जरनीरधरराजप्रभृतयः सामंतश्रेष्ठा अलौकिकं शौर्यं प्रदर्श्य सूर्यलोकं जग्मुः. ततश्च वृद्धः पितृव्यः कन्हचह्वाणो गृहीतसेनापतिपदो महता शौर्येण युयुधे. तस्य च वृद्धस्य कन्हचव्हाणस्य दिव्यं पराक्रममवलोक्य विस्मिता उभयपक्षीयाः सैनिकास्तं भीष्ममेवामन्यन्त. अथ तस्मिन्नपि महावीरेऽगणितान् सैनिकान् हत्वा लोकान्तरमुपगते सति पृथ्वीराजस्य भागिनेयः ' अह्नकुमारपरमारः सेनापतिर्बभूव. ' अयं च कुमारो यथा प्रकृत्यैव शूर आसीत्तथा दैविकशक्तिसंपन्नोऽपि.

एकदाऽयं नापितेन स्वकेशान् कर्तयन् कुताश्चित् कारणात्क्रुद्धेन राज्ञा पृथ्वीराजेन कोपभाषितेन ताडितस्तेन च कोपाकुलो भूत्वा खड्गं निष्कोषीचक्रे. राजा च तं क्रुद्धमवलोक्य सोपशमं 'वत्स! अल्हन! यत् खलु वीरस्य मस्तकं न तत्तस्य किंतु राज्ञ एवेति मन्वानोऽहमित्थं त्वामवदम्' इति जगाद. स तु निर्भीकस्तदानीमेव 'राजन्! न खलु वीरस्य मस्तकमेव राज्ञः किंतु शरीरमपि तस्यैव. वस्तुतस्तु अत्यल्पमिदमुच्यते. वीरस्य बुध्यादिकमपि स्वामिनएवेति प्रत्युत्तरयामास. अस्तु.

यदा च तं कनोजाधिपरोधाय मार्गे पृथ्वीराजः स्थापयित्वाऽग्रे गन्तुं प्रचचाल तदा स स्वामिभक्तो वीरः स्वमस्तकं खड्गेन च्छित्वा तस्मै दत्वाऽवदत्. राजन्! अहमस्मि देवतानुग्रहशाली. मदीयोपास्यदेवता मह्यमिमं वरमदात्. यावत्तव शिरो भूमौ न पतेत्तावत्त्वं न मरिष्यसीति. तदिदं मदीयं शिरो गृहीत्वा त्वं जवेन दिल्लीनगरं गच्छ. अहं च सर्वथाऽनुधावन्तं कनोजाधिपं रोत्स्यामि. परन्तु मदीयं शिरो भूमौ मा स्थापयेति.

पृथ्वीराजोऽपि तन्मस्तकं हस्तेन धृत्वा जवेन गच्छन् प्रखरसंतापविव्हलां संयोगितां वीक्ष्य कस्याचिन् महावृक्षस्य शीतलच्छायायां विश्रान्त्यर्थमवातरत्. राजकन्या संयोगिताऽपि प्रकृत्यैव कोमलांगी घोटकधावनेन पीडितसंधिर्महता कष्टेन भूमाववतीर्य तस्थौ. अचिरादेव ग्रीष्मकालरविकरसंतापजानिता पिपासा तामपीडयत्. तां च पिपासाकुलां वीक्ष्य पृथ्वीराजः कूपाज्जलं निष्कास्य तस्यै ददौ. सा च प्रबलपिपासा व्याकुलाऽपि स्वप्रियभर्तुर्हस्ते विराजमानं विगलद्रुधिरं रुण्डं विलोक्य संजातघृणा तज्जलं पातुं न शशाक. सर्वे

वृत्तं निवेद्याऽपि जलपानविमुखीं प्रबलमूर्च्छाक्रान्तां कान्तां संयोगितां प्रेक्ष्यागत्या तन्मस्तकं भूमौ निक्षिप्य हस्तौ प्रक्षाल्य नूतनं जलमानीय तस्याः पिपासां दूरीचकार. पतित एव तस्मिन् मस्तके युध्यमानः कबंधरूपः कुमारोऽपि धरणितले पपात.

तं च कुमारं पतितं समीक्ष्य निष्प्रतिबन्धं तत्कनोजराजसैन्यं पुनरपि अन्वधावत्. मार्गे पृथ्वीराजपक्षीयैर्यथाशक्ति कृतान् प्रतिबंधान्दूरीकृत्य गंगौघ इव दिल्लीनगरमागच्छत्.

अत्रान्तरे पृथ्वीराजः समं संयोगितया हाहुलीरायहमीररामगुरुपुरोहितचन्दकविनामकैस्त्रिभिः सामंतैश्च दिल्लीनगरं प्राविशत्. स्वस्वामिनं च सुरक्षितमागतं वीक्ष्यानन्दसंकुला जना दुर्गाधिकारिणः सैनिकाश्च महान्तं हर्षनादं चक्रुः.

तदानीमेवान्वागतं प्रलयकालिकमेघपटलमिव दुर्निरीक्ष्यं कनोजराजसैन्यं वीक्ष्य चिंतातुराः सत्वरं दुर्गद्वारं पिधाय महता सावधानेन स्वस्वविभागं परिपालयंतस्ते दुर्गपालाः शत्रोरागमनं प्रतिपालयामासुः.

कनोजाधिपतिर्जयचन्दो दिल्लीनगरं समीपमागतं वीक्ष्य सानंदो महता वेगेन नगरे प्रविशन्तं पृष्टतः स्थितसंयोगितांकं पृथ्वीराजं विलोक्य खिन्न इन्द्रप्रस्थदुर्गं रुरोध.

# दशमो गुच्छः।

१ कनोजाधिपस्य पृथ्वीराजाय स्वकन्यासमर्पणम्.

२ दिल्लीनगरे विवाहोत्सवः.

३ पृथ्वीराजस्य संयोगितया समं विलासाः.

४ चन्दकवेर्हाहुलीरायेण समं संवादः.

५ हाहुलीरायस्य गिझनीपतिना समं दिल्लीनगराक्रमणम् .

( १ )

कनोजाधिपो जयचन्द इन्द्रप्रस्थदुर्गमवरुध्य स्थितः स्वयमाचिंतयत्—इदानीं दिल्लीनगररोधेन किंवा लभ्यं? यथाशक्ति च पृथ्वीराजसामता अवशिष्टा योत्स्यन्त एव. अहं तु सेनाबलसमन्वितः सर्वानपि तान् हत्वा दिल्लीनगरं विजेष्यएव. अत्र न संशयः. पृथ्वीराजश्च याव-

ज्जीवं युध्येतैव. तं च निहत्य मम को वा लाभः? संयोगिता तु वैधव्यदुःखमसहमाना सहगमनं कुर्यादेव. एवं चानेन व्यापारेण जामातृवधः कन्याघातः समग्रदिल्लीनगरजनस्वास्थ्यविनाशो मया लभ्यः. पूर्वं च राजसूययज्ञोऽपि न संवृत्तः. अधुना कन्याघातेन जामातृवधेन स्वमुखं कलंकयिष्यामि. तदधुनेदमुचितमाभाति—तस्मै पृथ्वीराजायैव प्रीतिपूर्वकं संयोगिता समर्पणीया. यद्यपि मदीयाः शत्रयो मां हीनबलं मत्वाऽपहसेयुस्तथापि संयोगितावैधव्यदुःखापेक्षया तत्सह्यं भविष्यति. नचेह तादृशः कोप्यस्ति यस्य सर्वेऽपि कामा निर्विघ्नं सिद्धाः. मानवो हि स्वभावत एव नानाविधान् मनोरथान् करोति परंतु सर्वज्ञ ईश्वरः सर्वमेव संचितं कर्म वीक्ष्य तस्य कामान् पूरयति. तदस्मिन् परतंत्रे कामपूरणे केनाऽपि मानवेन खेदो न कर्तव्य इति तु सत्यं तत्वम्.

किंच—अद्यावधि मार्गे ये ये युद्धप्रसंगा जातास्तेषूभयपक्षीया वीरा जना अगणिता एव निपातिताः. तेषां संबन्धिनां च वृथैव मया शापो गृहीतः. तदधुनाऽपि भावी सेनाक्षयो रक्षणीय इति. एवं चिंतयन्नपि राजा जयचंदोऽपकीर्तिभीतो दोलायमानचित्तस्तूर्ष्णीं तस्थौ.

अथ तस्मिन्नेव समये चन्दकविः समागतमात्मानं द्वारपालमुखेन न्यवेदयत्. राजाऽपि कर्तव्यनिश्चये तस्य साहाय्यं जिघृक्षुः सादरमानीयासने समुपावेशयत्. चन्दकविश्च दत्ताशीर्वचनो राज्ञो दोलायमानं मनो निरीक्ष्य संतुष्टः प्रकटमुवाच-राजन्! कनोजाधिपते! साम्प्रतं त्वयाऽनेन युद्धेन किं वा लभ्यं? यदि दिल्लीनगरं, तदा बलाढ्यस्त्वमचिरादेव तत् स्वायत्तं करिष्यसीत्यत्र न संशयः. परन्त्वहं

मन्ये दिल्लीनगरविजयेन न तवाभीष्टं सिध्येत्. त्वदाभिष्टं तु कन्यां हरतः पृथ्वीराजस्य शासनं. परंत्वेतदशक्यं-यतो जीवतः पृथ्वीराजस्य बंदीकरणं खपुष्पसदृशं. सोऽपि च वीरश्रेष्ठो यथाशक्ति युध्वैव स्वर्ग-मलंकरिष्यति नेतरजनवत्तव कारागृहं ! सती संयोगिताऽपि तमेवानु-सरिष्यति. एवं स्थिते स्वकन्यायास्तथाजामातुर्घातजन्यं पातकमेव त्वं लप्स्यसे. किमेतदेव त्वदभीष्टं ? यद्येतत्तदा प्रवर्ततां घोरं युद्धं. अहं तु मन्ये—त्वादृशाः सात्विका राजान ईदृशाभीष्टसाधनार्थं न कदापि युध्यन्ते किंतु परपीडापरिहारार्थमेव. तामसा यवनादयो जनाः परेषां घातमेव स्वाभीष्टं मन्यंते युध्यंते च. तद्विरमास्मादपकीर्तिकारिणः संग्रामात्. यथा हि प्राचीना राजर्षयः स्वकन्यास्तरुणै राजकुमारै-र्गांधर्वविवाहेन व्यूढा अभिननंदुस्तथैव पृथ्वीराजं संयोगितां चाभि-नंद्य लोकेऽखण्डवासां कीर्तिं संपादय. यथाहि स्वकन्यां हरन्तं श्रीकृष्णं तदीयः पिताऽभिननंद तथैव त्वमपि कुरु. न तावद्रुक्मिणी-बंधुरिव तस्मै विद्रुह्यापयशो गृहाण. राजन् ! त्वं हि क्षत्रियकुला-लंकार ईदृशैः क्रूरैः कर्मभिः कुलांगारो माभूः. कनोजभूपाल ! पृथ्वीराजेन न तव कन्या हृता किंतु तयैव स्वयमात्माऽपहारितः. किं न श्रुतानि त्वया तद्बन्दीकरणार्थमनुधावतां त्वत्सामंतानां वचांसि. एवं स्थिते सकलक्षत्रियगणादृतो मुनिवरैरंगीकृतोऽयं गांधर्वविवाहः. तमनंगीकृत्य स्वस्य क्षत्रियत्वं गमयसि तद्विचार्यातः परं युद्धस्व ! केवलं युध्वा बंदीकृत्य च पृथ्वीराजं सकान्तं केवलं क्षणमात्रं स्वमनसः सन्तोषो वा श्रेयानुत परमानन्देन योग्याय पृथ्वीराजाय प्रियां कन्यां समर्प्य सकलजनसंतोषो यशश्च श्रेय इति स्वयमेव

विचारय. त्वं ही राजनीतिकुशलः कुशाग्रमतिरेतावदपि विचारयितुं न शक्नोषीति नाहं मन्य इति.

क्षीणसैन्योत्साहः कनोजाधिपः परममान्यस्य विदुषश्चन्दकवेरिदं परमोजस्वि भाषणं निशम्य समुत्पन्नमतिः कर्तव्यविचारणार्थं स्वसामंतानां सभामकरोत्. तत्रापि मिलितास्ते सर्वेऽपि व्यवहारकुशला वृद्धाः सामन्ताः सन्तोषेण पृथ्वीराजाय कन्यां समर्पयितुमेवावदन्. तमेतं सर्वेषामभिप्रयं ज्ञात्वा राजा जयचंदोऽपि त्यक्ताग्रहः स्वमनोगतं पृथ्वीराजाय निवेदयितुं स्वहस्तलेखं दूतेन समं प्राहिणोत्. पृथ्वीराज! दिल्लीपते! त्वं हि बलादस्मान् परिभाव्य मम कन्यां संयोगितां तरुणीमपाहर इति मत्वा कोपेन मयाऽनुद्रुतोऽसि शासनार्थं. अत्रागतोऽहं त्वयि सत्यमेव बद्धानुरागां मम कन्यां संयोगितां त्वया सह गांधर्वविवाहेन बद्धप्रेमग्रंथिमश्रौषम्. यथाहि वीरश्रेष्ठाः क्षत्रियराजाः स्वयमनुरक्तां कन्यां परीक्ष्य गांधर्वविवाहेन परिणयंते तथैव क्षत्रियकन्यका वीरश्रेष्ठान् स्वयं वृणते. त्वं हि शूरवीरमुकुटमणिर्दिल्लीनरेशः परं जामातृत्वेनाभ्यर्हितः. तल्लौकिकविवाहविधिविधानार्थमनुमोदस्व मां. अहं हि प्रीत्या सकललोकसाक्षिकं तुभ्यं कन्यां समर्प्य स्वराज्यं गन्तुमिच्छामि. तदविलंबेन मदीयामभ्यर्थनां सफलीकुरु इति.

पृथ्वीराजश्च तमिममकल्पितप्राप्तं सन्देशं निशम्यानुवाच्य चेमं लेखं विस्मितः सहसैवान्तःपुरं गत्वा तं लेखं स्वप्रियायै संयोगितायै प्रादर्शयत्. साऽपि विस्मयसागरनिमग्ना पुनःपुनस्तं लेखमपठत्. दिल्लीपतिश्च तथाऽवस्थां स्वप्रियामवलोक्य सहासं जगाद. प्रिये!

एष तव वृद्धः पिताऽधुना त्वां मह्यं दातुमिच्छति. मया तु प्रथमत एव भगवता मन्मथेन प्रदत्ता त्वं गृहीता. यद्यपि लौकिकविवाहविधेर्नावश्यकताऽस्मिन्विषये तथापि लोकाचारोऽनुपालनीय एव. तत्कथं मन्यस इति.

संयोगिता तु स्वपितुर्मनोरथं पूरयितुमिच्छन्ती सर्वं तदाज्ञानुरूपं वर्तितुमन्वमोदत. अचिरादेव तां संयोगितां दासीगणैः समं पृथ्वीराजो जयचंदस्य निवासं प्रैषयत्. न्यवेदयच्च दूतमुखेन राजन् ! युष्मत्सन्देशोऽस्माभिर्लब्धः. यथैव भवान् मन्यते तथैव भवतु. केवलं दुराग्रहेण त्वया मय्यनुरक्ता संयोगिता कारागारे स्थापिता. तन्मोचनार्थमेव मया प्रायति. लब्धं च यशः. तदसहमानेन त्वया पुनरपि युद्धं प्रारब्धं. इदानीं च भवानेव मह्यं तामर्पयति तदाऽतिसमीचीनं संवृत्तमिति मन्य इति.

राजा कनोजाधिपोऽपि स्वयमागतां स्वकन्यां संयोगितां महानंदेनाभिननंद. सर्वैः स्वस्वामन्तैः समं प्रत्युद्गम्य स्वस्कंधावारमानयत्. संयोगिताऽपि कुलशालिनी स्वापराधक्षमायाचनाय स्वहस्तकमलाभ्यां वृद्धस्य पितुः पादौ जग्राह. जयचन्दोऽपि स्वस्थमना महता मोदेन सर्वानपराधानाक्षाम्यत् .

( २ )

अथ जयचन्दो बृहस्पतिसमेन विदुषा स्वपुरोहितेन समं विदुषां सभां कारयित्वा स्वकन्याविवाहमुहूर्तं निर्णयौ. जयचंदस्तदेकापत्यः सर्वानपि स्वाधिकारिणोऽस्मिन्विवाहोत्सवे न्यूनतापरिहारार्थं-

माज्ञापयत्. दिल्लीनगरवासिनोऽपि स्वप्रभोः प्रतापशालिनः पृथ्वीराजस्य परममान्यस्य कनोजाधिपस्य जयचंदस्य परमलावण्यवत्या पुत्र्या समं विवाहं निशम्य सानंदा यथाशक्ति स्वस्वगृहाणि भूषयामासुः. तदानीं च तदखिलं दिल्लीनगरं स्थानेस्थाने नददसंख्यपटहं, संगीतगोष्ठीषु गायद्वारांगनासहस्रकंठमधुरध्वनिसमाकुलं, इतस्ततः ससंभ्रमं धावमाननागरिकपुरंध्रीगणचरणकमलनूपुरशिञ्जितग्रहणव्यग्रहंसगणव्याकुलम्, अगणितालंकृतबालिकापादपद्मनिर्गलितलाक्षारसरंजितराजमार्गं, पूर्णकुंभसंकुलदेहलीप्रतिगृहं, मंगलगानासक्तवैश्यांगनामनोहरं, सुव्यस्थितासंख्याश्विकगणपरिबाधं, गगनांगणविहरच्चित्रपटमयीभिः पताकाभिराच्छादितम्, प्रतिचतुष्कनिबद्धसुगन्धिकुसुममालानिपतत्परागधूसरनृपवीथ्याकं, आरामोपवनविलसत्सरसीरुहसुगन्धलोभधावद्भ्रमरझंकाररवमनोरमं, स्वस्वकर्मव्यग्रराजसेवकं, हस्तधृतकनकदण्डराजपुरुषसुरक्षितं नूतनमन्यादिवाभवत्. यत्खलु सततं निपतद्भयंकरलोहगोलकभयंकरं, पिहितकपटराजद्वारं, अनवरतयुध्यमानवीरगणसिंहनादव्याकुलं रणक्षेत्रमिव दिनद्वयात्पूर्वमासीत्तदेवाधुनाऽगाधानन्दविलासमग्नं स्थानेस्थाने स्थापितसत्कारमण्डपं विवाहानंदनिमग्नं वीक्ष्य को वा न विस्मयेत. को वा कालस्य माहात्म्यं लोकातीतं न ब्रूयात्. इयं सर्वा हि अलौकिकशक्तिशालिनः परमात्मनो लीलेति कोवा न वदेत्? अस्तु.

जयचंदस्तु स्वकन्याविवाहार्थं दिल्लीनगराद्बहिरत्युत्तमं विस्तीर्णं, नानाजातीयपुष्पवीथिकासनाथं, सततं मंदमंदवाहिकुल्यांभःशीतलं, प्रतिस्थानं विराचितकृत्रिमरमणीयजलयंत्रसुमनोहरम्, कुसुमितानेक-

विचित्रलताविहितनिकुञ्जसहस्रभासुरं, महदुपवनं विधाय तन्मध्ये ज्योतिर्विद्भिरचितस्थापनं अनेककाचगोलकप्रभाविचित्रं, सुंदरप्रकाशमानदीपावलीप्रकाशितम्, संघीभूयवेदपाठिब्राम्हणमुखरं, शास्त्रिकगणरक्षितम् विवाहमण्डपं व्यचरयत्.

एवं सर्वं सन्नाह्य विवाहदिवसे स्वयं पृथ्वीराजमानेतुं समं स्वसामन्तैः समं च सर्वैश्वर्येण जयचंदः कनोजाधिपः पृथ्वीराजप्रासादमभिलक्ष्य ययौ. तदानीं च दिल्लीनगरवासिनः सर्वेऽपि जनास्तदलौकिकं भूमिगतस्य कुबेरस्येवैश्वर्यं विलोक्य विस्मिताः परमतुष्यन्. सेना च सम्यक्परिष्कृतसैनिका क्रमेण गच्छंती गंगेव दुर्निरीक्ष्याऽभवत् सेनागजाश्च सततस्रवन्मदभारमलिनगण्डाः सुवर्णालंकारमंडिता मधुरक्वणत्घंटायुग्मभासुराः पर्वता इव मंदं मंदं चेलुः. सुवर्णतंतुवीतकौशेयपट्टवस्त्रविभूषितपृष्ठा अश्वाश्च सव्यपादविलसत्सुवर्णमयकटकभूषिताः कौशेयरज्जुबद्धाः साटोपं पादान्भुवि निदधतो जग्मुः. क्रमेलकमण्डलमपि सुसंस्कृतं सामोदं कण्ठस्थक्षुद्रघण्टिकानादलुब्धं प्रायासीत्. शतघ्नीविभागाअपि सुनेपथ्यधारिवीरमण्डिताः शनैःशनैःप्रययुः. एवं क्रमेण सर्वे सामंताः स्वस्वसैन्यैः समं प्रायुः. जयचंदोऽपि कनकवाहनधारिणं महांतं गजमारुढः सर्वाभिः पृथ्वीराजप्रजाभिः कृतान् प्रणामान् गृण्हन् पृथ्वीराजप्रासादस्य पुरत आगत्य हस्तिस्कंधादवाततार. तत्र च पृथ्वीराजामात्यैस्तथा तदीयेन पितृव्येन कह्वचह्वाणेन सादरं सत्कृतः सभास्थानमागत्य सर्वान् सत्काराञ्जग्राह.

अचिरादेव च भालप्रदेशविराजमानमौक्तिकमयपट्टबन्धः, कौशेयमंगलवस्त्रवेष्टितशिराः, कण्ठभागविराजमानहीरकालंकारप्रभाभासुर-

विस्तीर्णोरस्कः, सव्यभुजमध्यबद्धकेयूरकप्रदीप्तः, हीरकमयदेदीप्यमानमध्यबंधविभ्राजच्छुरिकः मध्यबंधबद्धहीरकमयकोशसुप्ततीक्ष्णखड्गदुर्निरीक्ष्यः, सुवर्णकटकरूपधारिण्या लक्ष्म्येव समलंकृतसव्यपादः, शौर्यप्रतापाभ्यामिव तेजस्विभ्यां निष्कोषखड्गधारिभ्यां द्वाभ्यां सामन्ताभ्यामनुगतः पृथ्वीराजस्तामेव सभामाजगाम. तदानीमेव सर्वैः सभ्यैः समं जयचन्दः प्रत्युत्थाय तं स्वहस्तेन गृहीत्वा सिंहासने समुपावेशयत्. पृष्टकुशलो वधूमण्डपं गंतुमुत्तस्थौ. अथ अग्रेसरनानाविधवाद्यभासुरवादकगणः शनैः संचरत्तदनुगामिभूषितमत्तगजकुलः, दीर्घह्रेषारवकारिबलमदोन्मत्तोत्तमाश्वारूढसादिकुलानुगतः, विचित्रराजचिन्हपताकाधारिसादिकुलभूषितः, अगणितजनसंकुलः, राजसमूहानुयातो दिल्लीश्वरः सम्राट् पृथ्वीराजो बंदिजनोच्चारितविरुदघोषणः शनैः शनैः स्वप्रासादान्निर्गत्य सीमन्तिनीकृतनीराजनः क्रमेण वधूनिवासमाजगाम. तदानीमेव सकलवैदिकगणपरिवेष्टिते, पुरोधसाऽधिष्ठिते, लग्नवेदिस्थले स्थित्वा वध्वागमनं प्रतिपालयामास.

अचिरादेव मौक्तिकमयकौशेयवस्त्रप्रावृतसर्वांगी, विवाहालंकारालंकृता, अलक्तकरागरंजितपादयुगला, मध्यप्रदेशविराजमानरशनाक्षुद्रघंटिकानादमधुरं भुवि चरणौ क्षिपन्ती हस्तकमलधृतपुष्पमाला, संचरन्ती प्रेममूर्तिरिव दासीजनैरनुगम्यमाना तरुणी संयोगिता वेदिस्थानमलंचक्रे. तदानीं प्रावर्तन्त चोच्चैर्वैदिकानां वधूवरयोः शुभकारिण आशीर्वादमया वैदिकमंत्राः. अवसितेषु तेषु वैदिकमंत्रेषु राजा जयचंदः परमप्रेम्णा यावकरसेन मूर्तेन प्रेम्णेव रंजितं किसलय-

च्छविभासुरं संयोगितायाः कराग्रं स्वकराग्रेण धृत्वा पृथ्वीराजस्य हस्ते तन्निधाय सगद्गदं—क्षत्रियश्रेष्ठ ! राजन् ! पृथ्वीपते ! अयं हि हस्तस्तुभ्यं संयोगिताहृदयवासिना मनोभुवा पूर्वं प्रदत्त एव. साम्प्रतं तु इमं लौकिकविवाहेऽग्निविप्रसाक्षिकं तेऽहं समर्पयामि. एषा संयोगिता त्वया स्वगुणैः संपादिता. न खलु मया प्रदत्ता. न खलु सागरादृत्तेऽन्यः कश्चन नदीनां पतित्वेऽर्हः. अयं हि करो रत्नगणमण्डितकंकणभूषितोऽन्येषां दुष्प्रापः. एषा संयोगिता हि करदानमिषेण त्वयि बद्धानुरागं हृदयमेव ते समर्पयति. तदात्मवदिमं पालय. त्वया सह मीलितेयं मम कन्या विष्णोर्लक्ष्मीरिव चिरमलंकरोतु दिल्लीराजसिंहासनमिति जगाद. पृथ्वीराजोऽपि प्रदत्तोचितोत्तरस्तस्य श्वशुरस्य पादावभिवंद्य सर्वेभ्यो विप्रेभ्यो भूयसीं दाक्षिणां वितीर्य मूर्तया कीर्त्येव तया नूतनवध्वा समं स्वावासमागमत्. जयचंदोऽपि विस्मृतपूर्ववृत्तः स्वयोग्यतानुरूपं सम्पदं दासीगणं भूविभागांश्च दिल्लीश्वराय जामात्रे ददौ. अभोजयश्चागणितान्विप्रान्. सत्कारयामास सर्वानपि पृथ्वीराजसामंतान्. विविधैरुपचारैः स्वजामातुर्मनोऽरंजयत्. मृगयादिभिरपि सर्वेषां सामंतानां मनांसि समतोषयत्. राजा पृथ्वीराजोऽपि स्वप्रजास्तथा कनोजाधिपतिसामंतानसेवत.

अथ कतिपयदिनान्युषित्वा गृहीतस्वदेशगमनानुज्ञो कनोजाधिपः स्वदेशमाजगाम.

(३)

इत्थं महता सायासेन महता युद्धेन च कनोजाधिपं विजित्य संयोगितां लब्ध्वा स पृथ्वीराज आत्मानं कृतकृत्यं मन्यमानोऽद्वितीयेन तारुण्यसहायेन संयोगिताया लावण्येन मोहितमतिर्विलासैकसक्तो बभूव. स च कदाचित् प्रभाते स्नात्वा विरचितसंध्योपासनः क्षणमात्रं राजसभां गत्वा राज्यकार्याण्यपश्यत्. संयोगिता तु तावत्कालमपि पतिविरहमसहमाना भूयोभूयो विज्ञप्य राजसभागमनात्तं न्यवर्तयत्. प्रधानामात्याश्च परं विश्वासपात्राणि कृत्स्नमपि राज्यकार्यं सम्यगकुर्वन्. पृथ्वीराजशत्रवस्तु तं विलासनिमग्नं शृण्वन्तोऽपि तत्प्रजानां राजनिष्ठां तदीयं शौर्यं च जानन्तो न किमप्यकुर्वन्. पृथ्वीराजश्च संयोगितया समं तेषु तेषु ऋतुषु नानाविधान्विलासांश्चक्रे.

अचिरादेव मदमत्तकोकिलालापमधुरः, सर्वतः प्रफुल्लकुसुमितागणितवनलतामोदान्धभ्रमरझंकाररम्यः, मदनबाणैरिव सुतीक्ष्णैरुग्रगन्धैराम्रकोरकैर्व्याप्तानेकसहकारः, चन्दनगन्धवाहितडागजलसंगिमलयवातहृद्यः, निर्निद्रसुवर्णचंपककलिकाकिंजल्काच्छादितभूविभागः, प्रफुल्लपारिजातकुसुमविरचितभूशय्यः, तारुण्यमदोन्मत्ततरुणीभिरिव कुसुमस्तबकावनम्रमल्लिकालताभिराक्रान्तसकलारामः, सप्रियकरसंचरत्तरुणीगणकृतस्वागतः, मानिनीमानविस्रंसनमहावैद्यः, ऋतुराजो वसंतसमयस्तयोर्विलासे साहाय्यविधित्सयेव समाजगाम.

तावपि शृंगारशास्त्रपारगौ शरीरसंपत्समान्वितौ तारुण्यमदशालिनौ तं समागतं वसन्तसमयं सत्कर्तुं समारभेताम्.

कदाचित् सततनिपतत्परागाच्छादितासु, परभृतालापनादितासु, निर्निद्रचूतकलिकामोदमधुरासु सहकारवीथिषु कृतनिवासौ संगीतकथाभिः, वारांगनानृत्यैः, नानाविधयौवनविलासैरात्मानमरमयताम्.

कदाचित्– अतिचपलासु, नानाविधवर्णरंजितासु, मन्दवातसंगोत्थतरंगचंचलासु नौकासु स्थित्वा परस्परकण्ठगतबाहुपाशौ चिरं मदनशरपीडितयोर्हंसयोर्लीलामपश्यताम्.

अन्यदा तु--सततनिपतत्कुसुमास्तृतभूमिषु बकुलवीथिकासु चंपकलतासंमिश्रासु विरचितकृत्रिमदोलासु स्थितौ सुखमयीः क्रीडाश्चक्राते.

कदाचित्–प्रफुल्लकुसुममयीनां, बालपल्लवमधुराणां माधवीलतानां निकुञ्जेषु अतिमधुरगन्धचन्दनसिक्तैश्चंपकबकुलसहकाराशोककुसुमैर्विरचितासु पुष्पशय्यासु रतिविलासानकुरुताम्.

एवं वसन्तसमयं निर्विशेषमुपभोगेनादृत्य ग्रीष्मसमयं सेवितुमारेभाते.

कदाचित्--अनेकयंत्रमुक्तैः सुगन्धिजलसेकैरार्द्रीकृते, घनसारचूर्णसिकते, मन्दमन्दवाहिकुल्याजलशीतले, अनेकपल्लवमयलतासमाच्छादिते धारागृहे समारब्धसंगीतौ सुखेन समयमयापयताम्.

कदाचित्–अतिनिर्मलजलासु, कमलसहस्रदुर्ज्ञेयतरुणीमुखचन्द्रासु, हंसमिथुनशब्दमुखरासु, लतानिवारितातपासु गृहदीर्घिकासु वा सरसीषु वा तौ स्नानमिषेण विहरन्तौ चिरमरमेताम्.

कदाचित्--निर्मलचन्द्रिकारमणीयासु, उशीरजवनिकासंगशीतकासु, अगरुचन्दनजलसिक्तासु, स्फटिकमणिमयीषु, व्यजनवातशीतलितासु प्रासादाट्टालिकासु शारफलक्रीडाश्चक्राते.

ततश्च गर्जैश्चपलालंकृतमेघावृतगगनतलो वर्षासमयोऽपि तं सेवितुं सामन्त इवाजगाम.

तदानीं तु--कुसुमस्तबकालंकृतानां कदम्बवृक्षाणामधस्तात्, पारिजातवृक्षवीथिकासु, जलभरातिक्रान्तकूलानां सुनदीनां तीरेषु अनवरतजलपातमनोहरासु कदलीराजिषु चिरं विलेसतुः.

कदाचित्– अत्युन्नतपर्वतशिखराग्रवर्तिराजप्रासादवातायनेषु स्थित्वा प्रबलवातनुन्नसजवघनघटाः, मन्दं मन्दं चपलविलसितानि, महता वेगेनाधस्तान्निपततो जलप्रवाहान् पश्यन्तौ क्षणमिव सकलं दिवसमगमयताम्.

कदाचित्-- जलपरिपूर्णेषु बीजांकुरहरितेषु पंकमयेषु क्षेत्रेषु प्रधावनश्रान्तहरिणमिथुनविहारदर्शनेनात्मानममोदयताम्.

एवं चिरवासं वर्षासमयमभिलक्ष्य संजातवैतृष्ण्यं तं पृथ्वीराजं प्रेक्ष्य नूतना संयोगितायाः सखीव शरत्तं सेवितुमारभत.

तत्र च-सूक्ष्मनिर्मलसलिलप्रवाहानां, तीरविराजमानमृदुलपंकानां, काशस्तबकालंकृतोभयतीराणां नदीनां पात्रेषु हंसमिथुनानि वीक्ष्य नितम्बबिम्बानुकारीणि पुलिनजातानि समालोक्य परं रेमाते.

कदाचित्-- अतिनिर्मलपरागधूमरसलिलमण्डितासु, चक्रवाकयुगलचंक्रमणसंजातलहरीषु, गृहदीर्घिकासु स्वयमवतीर्य कृतजलक्षेपविलासौ परमप्रफुल्लानि सहस्रपत्रमंडितानि लक्ष्मीनिवासभवनानीवातिरमणीयानि कमलानि विलूय तन्मालाभिः परस्परमलंकुर्वन्तौ समतुष्यताम्.

कदाचिन्मृगयामिषेण जनसंमर्दं परिहरन्तौ सस्यपरिपाकपिशंगानि, क्वचिद्रूढतघासश्यामलानि क्वचित्संस्कृतभूमिकृष्णानि क्षेत्राणि पश्यन्तौ, स्थाने स्थाने समुत्पन्नानां वन्यलतानां स्वादूनि फलानि भक्षयन्तौ चिरमेकान्तवाससुखमसेवेताम्.

तदानीमेव तं सम्राजं संयोगिताविलासमग्नमवलोक्य हेमन्तर्तुर्विलासानिर्विरागच्छत्.

तत्र च— तुहिनकणमौक्तिकमालालंकृतान् लताभिः स्वकोमलशाखाग्रैराश्लिष्टान् वृक्षान्, हिमानीपीडापरिहारायेव स्वास्तिकीकृतकरजालं सूर्यं, शीतवातकम्पमानगाढाश्लेषतत्परमिथुनगणं, निरीक्ष्य तूलशय्यामये निर्धूमांगारपूर्णलोहपात्रे, अगरुचन्दनधूपधूमचुम्बितवितानेगर्भगृहे चिरमस्वपताम्.

कदाचित्-- अनुदित एव भगवति मरीचिमालिनि, मौक्तिकभस्मस्वादूनि, आमलकरसपाकव्यंजनानि, बातामदाडिमादिपौष्टिकपदार्थरुचिराणि, पक्वान्नानि भुंजानौ, कस्तूरिकाप्रचुरगंधविरचितांगलेपनौ, ऊर्णावस्त्राणि परिधाय पाशक्रीडामकुरुताम्.

कदाचित्-- प्रबलतुहिनान्धकारव्याप्ते, अदृश्यमानवृक्षोच्चमप्रदेशे, अगणिततुषारकणमौक्तिकराजिसमलंकृतभूप्रदेशे, प्रभाते समु-

स्थायातिकोमलरविकिरणापनीतहिमौ सर्वत्र पर्यटनेन हेमन्तश्रियं पश्यन्तौ चिरं मुमुदाते.

एवमेवापगते हेमन्ते शिशिर्तुः शनैस्तं सेवितुं प्रचक्रमे.

तत्र तु-- विरलीभवद्धिमजवनिके, सुखकरसमशीतोष्णवाते, कुसुमितकुन्दलतापुष्पामोदमधुरे, प्रजववातोत्थापितधूलीपदधूसरदिगन्ते सायंकालेऽभ्राभ्याम् पर्यटन्तौ हिमकृतां जातीलतादुर्दशां विलोक्य खिन्नौ नूतनकिसलयमण्डितान् सहकारादीन्विलोक्य सममेव सुखदुःखे अन्वभूताम्.

कदाचित्-- प्रबलवातजर्जरीकृतशुष्कपत्रध्वनिभीषणः नयन-पीडाकारिधूलिधूसरव्याप्तदिगन्तः, सकललतावल्लीदलवस्त्रलुण्ठकः, नानावृक्षगणपत्राच्छादनापहरणदक्षः शिशिरः कदाचिदतिलावण्यवत्याः प्रियायाः संयोगितायाः स्वस्य च शरीरं पीडयेदिति मन्वानौ गर्भगृह एव स्थित्वा क्रीडां चक्रतुः.

एवं रात्रिंदिवं विलसतोस्तयोः संयोगितापृथ्वीराजयोर्मनसि स्वराज्यचिंता नैव पदं लेभे. नापि कामवासनाऽशाम्यत्. सा च प्रत्यर्पितघृता वन्हिज्वालेव प्रतिदिनं ववृधे. यद्यपि राजनिष्ठाः प्रधानामात्याः स्वस्य कार्याणि दाक्षिण्येनाकुर्वंस्तथापि स्वामिनं राज-कार्यविमुखमुपलभ्य कुमार्गगामिनो नीचा जना राजकार्यविघ्नानुत्पाद-यामासुः.

एकस्मिन्दिने मृगयार्थं निर्गतं पृथ्वीराजं निशम्य सर्वे तदीया मृगयासहाया अपि तत्साहाय्यार्थमागच्छन्. अचिरादेवाटविकैः

'अस्यां गुहायां सिंहो वसति' इति वार्ता समानीता. तां वार्तां निशम्य सर्वे मृगयवो महान्तं कोलाहलं कुर्वन्तस्तत्रैवाजग्मुः. निर्जगाम च ततोऽचिरादेव सिंहचर्मप्रावरणो जटाकलापमण्डितशिराः क्रोधरक्ततरनयनयुगलो महांस्तापसः. स तु बहिरागत्योच्चैः– नृपाधम! पृथ्वीराज! अहं चात्र निभृतं स्थितस्तीव्रं तपश्चरामि. तुभ्यं च तस्य नवममंशं वितरामि. वृथैव मदान्धेन त्वया मदीया तपस्या विघ्निता. तदचिरादेव त्वदीयः शत्रुस्त्वां वन्दीकृत्य त्वदीये अक्षिणी काचेन विदारयिष्यतीति शशाप.

तमिमं शापं सुलभकोपस्य दुर्वाससः शिष्येण चक्षुःश्रवसा प्रदत्तं निशम्य खिन्नः पृथ्वीराजः स्वयमागत्य तस्य मुनेः पादयोः पपात. दयानिधे! मुनिवर! अज्ञानतः कृतोऽयं दासस्यापराधः क्षन्तव्य इति व्यजिज्ञपच्च. स तु क्रुद्धो मुनिः 'राजन्! न ममायं शापो मृषा भविष्यति. किंतु अयमित आरभ्य वर्षादूर्ध्वं भविष्यतीति प्रलपंस्तिरोदधे. राजाऽपि लब्धधैर्यः संयोगितया समं विलासनिमग्नो बभूव. यद्यपि परीक्षिदेव पृथ्वीराजेनावशिष्टे वर्षे देहसाफल्यं कर्तव्यमासीत्तथापि प्रकृतित एव रजोगुणाधिक्येन संयोगितालावण्यलुब्धो न किंचिदपि उचितं चिन्तयामास. प्रत्युत पुनरपि पशुवद्विषयकर्दमासक्तो बभूव.

(४)

एवं विलासपरे दिल्लीश्वरे क्रमेणाधमा जनाः सर्वत्र स्वव्यवसायानारभन्त. शत्रवोऽपि निभृतं गूढचारैर्ज्ञातवृत्तान्तास्तस्य राज्य-

स्यापहरणाय प्रायतन्त. परोत्कर्षासहिष्णवोऽमात्याः परस्परद्वेषपरा अभवन्. सैनिकाश्च स्वस्ववेतनमलभमाना युद्धाभावात्त्रस्ता अन्यनृपाणां सेनां प्राविशन्. महंमदीयः शहाबुद्दीनश्च भूयोभूयः पृथ्वीराजेन पराजितोपि पुनरपि दिल्लीराज्याक्रमणार्थं प्रायतत. तदानीं चेमां स्वराज्यस्य दुर्दशां विलोक्य सर्वेऽपि वृद्धा नागरिका मिलित्वा किंकर्तव्यताविचारार्थं सभां चक्रुः. तत्रच मिलितास्ते कृत्स्नां राज्यव्यवस्थां विलासमग्नाय राज्ञे पृथ्वीराजाय निवेदयितुं चन्दकविं विज्ञापयामासुः.

चन्दकविश्च तेषां राजनिष्ठानां प्रजामुख्यानां विज्ञप्तिमाकर्ण्य परं खिन्नो जगाद— नागरिकमुख्याः! यद्यपि युष्मदर्थमहं पृथ्वीराजस्य विलासमंदिरं गत्वा सर्वं वृत्तं तस्मै निवेदयिष्यामि तथापि संयोगिताप्रेमपाशबद्धः स पृथ्वीराजस्तन्न श्रोष्यतीति निश्चितमेव. कथं खलु विषयानुरागकलुषेऽन्तःकरणे कर्तव्यजिज्ञासा प्रादुर्भवेत्? अयं हि हाहुलीरायः सामन्तः पृथ्वीराजस्य परमं मित्रम्. संयोगिताहरणेऽयमेव प्राधान्येन पृथ्वीराजमसहाययत्. परन्तु साम्प्रतं विषयलुब्धः स स्वसाहाय्यकारिणमपि न पृच्छति कुतो मां विप्रं! तथाप्यावां विलासमन्दिरं गत्वा यथाशक्ति सर्वं वृत्तं निवेदयितुं प्रयतावहे इति.

अथ चन्दकविः समं हाहुलीरायेण विलासमन्दिरद्वारं गत्वा दासीनां मुख्याया दास्या हस्त इदं पत्रं ददौ. —

राजन्विलासमग्नस्त्वं । गौरांग्या राजकन्यया ॥
इतो माहंमदः शत्रुः । तव राज्यं जिघृक्षति ॥ १ ॥

सा तु दासी क्रमेणागणितान् दासीनां संघानुलंघ्य राज्ञः समीपे तत् पत्रं चिक्षेप. तस्मिन् समये राजा पृथ्वीपतिरन्यत्रमना अभूत्. तदानीमेव तत्पत्रं कुशाग्रमत्या संयोगितया पठितं. प्रपठ्य चोच्चैः सा राजानं जगाद--- नाथ! क एष पापी. युष्मान् मया सह विलासकारिणो वीक्ष्यासूययति. अनेकजन्मसंपादितैः सुकृतैरहमनयोश्चरणयोर्दास्यभवम्. साम्प्रतमपि यदि न मनोरथं सफलयिष्यामि तदाऽहमभाग्या स्याम्. तस्मादिदं चूर्णीकृत्य वन्हौ निक्षिपामि इति. राजा च स्त्रैणमतिर्न किमपि प्रत्युवाच. प्रत्युत सलीलं जहास. तेन च समुत्तेजिता राज्ञी संयोगिता सर्वाअपि स्वदासीः ' येनेदं पत्रमानीतं यश्च तस्य साहाय्यकारी तावुभावपि वेत्रैः पृष्ठे ताडयत. येन भीतोऽन्यः कोपीदृशं पत्रं नानयेदित्यशात्. राज्ञ्या इमामाज्ञां कर्णेकृत्वा सर्वा-अपि संयोगितादास्यो वेत्रहस्ताः स्वामिन्या नियोगमनुष्ठातुमहमहमिकयाऽधावन्.

तौ च चन्दकविहाहुलीरायौ महतौत्सुक्येन राजाज्ञाश्रवणे सोत्कण्ठौ महता वेगेनागच्छन्तं दासीगणं वीक्ष्य संमुखमभवतां. तदानीमेव तयोः पृष्ठयोर्वेत्राघाताः समापतन्. तौ तु कारणमविज्ञाय संभ्रान्तौ मुहुर्तं निश्चलमतिष्ठताम्. यद्यपि तासां दासीनां शासने पर्याप्तबलौ तौ तथाप्यबलानामुपरि हस्तक्षेपो वीराणां नोचित इति मन्वानौ कथमपि राजद्वारकपाटे पृष्ठाभ्यां धृत्वा वेत्राघातान् पर्यहरन्. अत्रान्तरे स्वदासीप्रतापस्य तथा स्वशत्रुशासनदुःखस्य दिदृक्षया तत्रैव पृथ्वीराजेन समं संयोगिता समाजगाम. सा च

वेत्राघातपरिहाराय पृष्टेन कपाटं धृत्वावस्थितौ स्वदासीगणपरिवेष्टितौ चन्दकविहाहुलीरायौ वीक्ष्यैचैर्जहास.

तस्मिन्नेव क्षणे क्रोधरक्तनयनकमलः स क्षत्रियश्रेष्ठस्तं हासं कर्णेकृत्वाऽऽत्मानमपमानितं मन्वानो विधूय तत्कपाटं तासां दासीनां पुरतस्तथौ. अवदच्च – दास्यः ! कृत्स्नमपि युष्मत्कर्मावशिष्टया राजप्रीत्या सोढं. साम्प्रतं तु सा समूलं नष्टा. तद्यदि या खलु दासी यमालयं द्रष्टुमिच्छेत्तयैव वेत्राघातः करणीय इति. तस्य तदुग्रं भाषणं निशम्य सर्वा अपि दास्यः पलायिताः स्वस्वस्थानं जग्मुः. दासीषु च निवृत्तासु कोपातिरेकप्रस्फुरदधरोष्ठः स चन्दकविमाह– कविश्रेष्ठ ! एतावत्कालपर्यन्तं कृतायाः सेवाया इदं पारितोषिकं पृथ्वीराजेन वितीर्णं. एतावावां संयोगितया सम्यक् सत्कृतौ. अयं हि संयोगितायां लाभेनात्मानं धन्यं मन्यमानः सर्वानपि नो दीनान् मन्यते. एषा संयोगिताऽपि नः क्षुद्रान्मन्यमाना दासीहस्तेन ताडयति. तद्यावदिमां मदोन्मत्तां संयोगितां वैधव्यपंकमग्नां न करिष्यामि तावत्पर्यन्तमहमस्मिन्दिल्लीनगरे जलं न पास्यामि. भ्रातः ! चन्द्रकवे ! किं ते रोचते? इति. चन्दकविस्तु श्रवणकटु हाहुलीरायस्येदं भाषणं निशम्य खिन्नोऽवदत्–हाहुलीराय ? त्वदीयाः सर्वे पितरो यावज्जीवं स्वस्वामिचरणाराधनपराः स्वर्गमगच्छन्. तेषामेव कुले जनित्वा किमिदमसंबद्धं प्रलपसि ! कदाचिदस्वस्थमनाः स्वामी सेवकान्पीडयतीति सेवकैः क्रोधात् स्वाम्येव हन्तव्यः ? कदाचिद्दुग्धमदत्त्वा पादाघातं करोति गौरिति किं गौरेव हन्तव्या. तात ! हाहुलीराय ! इत्थं कोप-

कलुषितमनाः पापभाजनं माभूः. अयमपि नः स्वामी शीघ्रमेव प्रकृतिस्थो भविष्यतीति.

हाहुलीरायश्च रजोगुणाधिक्यशाली ' यूयं हि खलु बन्दिनः! मानापमानयोः कथैव भवद्भिर्न ज्ञायते. यथाकथंचिद्राजस्तुतिः करणीया. रुचिराणि पक्वान्नानि भोक्तव्यानि. एवं श्ववत् कालं यापयन्तः कथं मानापमानवार्तां ज्ञास्यथ. तिरस्कृतः श्वाऽपि न पुनस्तं सेवते किमुत मानधनोमानवः! तत्तिष्ठत यूयमस्य मदमत्तस्य राज्ञोऽपमानपारितोषिकाणि गृण्हन्तः? अहं चेतो गत्वा गिझनीपतिं शहाबुद्धीनमाहूय पृथ्वीराजं बन्दिनं कृत्वा संयोगितागर्वमपनेष्यामि इतिवदन्नेव प्रजवमश्वमारुह्य गिझनीनगरमभिलक्ष्यागात्.

( ५ )

भीष्मप्रतिज्ञं हाहुलीरायं कोपकलुषं यवनराजमानेतुं गतं निशम्य सर्वेऽपि दिल्लीनगरवासिनो जना अत्यन्तं चिन्तातुरा अभवन्. ये खलु प्रधानामात्या राज्यकार्यभारधुरंधरा आसंस्तेऽपि अपमानभिया सर्वं वृत्तं निवेदयितुं राज्ञे नाशकन्. ये च धनिका आसंस्ते स्वधनरक्षणचिन्तामग्नाः शनैः शनैर्नगरादपासरन्. ये खलु कुलीनास्ते स्वशीलरक्षणाय स्वकान्ताः कन्यकाश्चान्यत्रप्रैषयन्. ये च धार्मिकास्ते राजसंकटपरिहाराय नानाविधान् धार्मिकानुपायानातिष्ठन्त.

हाहुलीरायश्च सकोपं दिल्लीनगरान्निर्गतो गिझनीनगरमागत्य तदधिपं शहाबुद्धीनमपश्यत्. तेन कृतसत्कारस्तमुवाच. राजन्? एष

हि उचितोऽवसरो दिल्लीनगराक्रमणस्य. यतो पृथ्वीराजः संयोगिताविलासमग्नो न किंचिदपि राजकार्यं पश्यति. प्रत्युत सर्वानपि सामन्तानपमानयति. यो हि भीष्म इव प्रतापशाली चामुण्डरायः सोऽधुना बन्दीकृतः शस्त्रं त्यक्त्वा तूष्णीं तिष्ठति. बृहस्पतिरिव बुद्धिमान्कयमाषामात्यस्तु स्वयमेव तेन निहतः. अवशिष्टाः शूराश्च संयोगिताहरणसमये समरांगणे पतिताः. तदिदानीमेव सत्वरं दिल्लीनगरमाक्रम्य चिरमभिलषितं सफलीकरोत्विति.

धूर्तः शहाबुद्दीनो हाहुलीरायं शत्रुपक्ष्यं जानन्न सहसा तस्मिन् व्यश्वसीत्. प्रेषयामास च स्वविश्वासपात्रं कंचन सामन्तं पृथ्वीराजराज्यस्थितिनिरीक्षणाय. सोऽपि गत्वा हाहुलीरायकथितं सर्वं प्रत्यक्षीकृत्य प्रतिनिवृत्तः स्वस्वामिने सर्वं वृत्तान्तं न्यवेदयत्. शहाबुद्दीनश्च तं श्रुत्वा सन्तुष्टश्चिरवांच्छितं मनोरथं पूरयितुमुत्सुकः स्वसेनां समनह्यत्. क्रमेण दिल्लीनगराक्रमणाय स्वराजधान्याः सकाशात् प्रतस्थे च.

# एकादशो गुच्छः ।

१ चित्तोडाधिपस्य दिल्लीरक्षणार्थमागमनम्.
२ उभयोः परस्परं मीलनं सत्कारश्च.
३ वीरभद्राविर्भावो भविष्यत्कथनम्.
   पृथ्वीराजस्य स्वप्नं च.
४ सेनासन्नाहः.
५ संयोगितापृथ्वीराजयोश्चरमं मीलनम्.

अतिक्रूरसैनिकं मूर्तिमन्तं यममिव तं शहाबुद्दीनं समागच्छन्तं निशम्य सर्वेऽपि दिल्लीनगरवासिनो जनाः परं दुःखाकुलाश्चिन्तासागरे न्यमज्जन्. प्रजाश्च ज्ञातयवनस्वभावाः स्वशीलरक्षणाय तथा स्वधनस्य पालनाय सहसा तन्नगरं विहायान्यत्र गन्तुमारभन्त. तेन च यत्खलु दिल्लीनगरं विविधकलागारं रत्नापणाढ्यमनेकशिल्पिसं-कुलमासीत्तदेव सम्प्रति ग्रामटिकासादृश्यमभजत. राजपुरुषाश्च किंकर्तव्यतामूढाः स्वस्वकार्याणि कथमपि कुर्वन्तः प्राधान्येन स्वार्थ-

परा अभवन्. तेन चावशिष्टाः प्रजाजना अपि सत्वरमन्यत्रागच्छन्. विशेषतश्चास्मिन् प्रसंगे राजानं विलासमग्नमवलोक्य सर्वेऽपि नागरिका दुःखाकुला अजायन्त.

अथ सर्वेऽपि मान्या अधिकारिणो महान्तो नागरिकाः सर्वे मिलित्वा कर्तव्यं विचारयामासुः. ते च सर्वेषां सभ्यानां महतीं सभां विधाय पृथ्वीराजस्य कर्तव्यताबोधार्थं तस्य परमं मित्रं चितोडाधिपः समरसिंहः समाह्वयनीयः. स च निवेदिताखिलवृत्तः सत्वरमेव स्वश्यालस्य साहाय्यार्थमागमिष्यतीति निरणयन्. प्रैषयंश्च दूतं तदन्तिके. स तु चितोडाधीशः समरसिंहो दूतमुखात् कृत्स्नं पृथ्वीराजवृत्तं निशम्य विस्मितः स्वधर्मस्य तथा स्वसंबंधिनश्च रक्षणार्थं त्वरितं दिल्लीनगरं गन्तुमैच्छत्.

अचिरादेव च प्रतस्थे—मदमलिनमातंगघटामलिनीकृतमेदिनीमार्गः, अगणितवाजिहेषारवबधिरितसकलदिशः, क्रमेलककण्ठघंटाजातवाचालितसीमान्तभागः, अनन्तशूरसैनिकगणमुक्तसिंहनादविदारितसकलश्रवणपुटः, स सकलसौभाग्यशाली मूर्तिमान् धर्म इव सदाचारसम्पन्नः सनातनधर्मानुयायी चितोडनराधीशः समरसिंहः. प्रतिस्थानं च विदितवृत्तान्ताः सनातनधर्मरक्षणाय बद्धपरिकराः शत्रुकण्ठनालरुधिरपानतृष्णाव्याकुलाः क्षत्रियश्रेष्ठाः साहाय्यकारिणस्तममीलन्. सोऽपि तान् सर्वानपि प्रेम्णा सत्कृत्य स्वधर्मरक्षणाय स्वसेनायां स्थापयामास.

एवं क्रमेण चितोडनगरान्निर्गता सा क्षत्रियसेना क्रमेण मार्गे समागतैः क्षत्रियश्रेष्ठैः सह मिलिता गंगेवातिविस्तीर्णा बभूव. राजा

समरसिंहश्च दिल्लीनगरमागत्य पृथ्वीराजस्य प्रधानामात्यैः कृतस्वागतो बहिरेव क्लृप्तस्कंधावारो न्यवसत्. सर्वत्र संचारिभ्यो गूढचारेभ्यः सर्वं गिझनीपतेः शहाबुद्धीनस्य चेष्टितमजानात्.

अथ दिल्लीनगरमागत्य निवसतः श्रीचितोडाधिपस्य दश दिनानि संवृत्तानि. तावत्कालं पृथ्वीराजस्य वार्ताऽपि तेन न श्रुता. तेन सचिन्तः स मनसि विचारयामास. अहो! पृथ्वीराजस्य राजनीत्यदाक्षिण्यं, मौर्ख्यं, अनवधानता. यदहमत्र ससैन्यमागत्य निवसामि. परन्तु मदागमनं स न जानात्येव. मादृशां ज्ञाने यदीदृश्यवस्था तदा को वा शत्रुसंबंधी निभृतमत्रागत्य किंकरोतीति ज्ञातुं कथं स शक्नुयात्. एवंस्थिते शहाबुद्धिनोऽकस्मादागत्य दिल्लीनगरमाक्रम्य पृथ्वीराजं बन्दिनं कुर्यात्तदा महदनिष्टमापतेत्. तदयमवसर एव बोधनीय इति. विचार्यैवं समरसिंहः कंचनातिचतुरमन्तःपुरप्रवेशोचितं सेवकमाहूयावदत्-त्वं हि महता चातुर्येण संयोगिताविलासमन्दिरं प्रविश्यैकाकिनः पृथ्वीराजस्य हस्त इदं पत्रं क्षिपेति. तच्च पत्रमित्थम्.

पृथ्वीराज! क्षत्रियश्रेष्ठ! सर्वत्र संचरतां दूतानां मुखेभ्यो दिल्लीनगराक्रमणाय समागच्छन्तं शहाबुद्धीनमवगम्य तव साहाय्यविधानायानाहूतोऽपि समागत्य तिष्ठामि. अत्रागत्य तिष्ठतो मे दश दिनानि संवृत्तानि. तथापि मदागमनं न जानाति भवान्. यदि मादृशो मित्रस्येयमवस्था तदा गुप्तमागच्छतः शत्रुसैन्यस्य वार्तां कथं जानीयात्. त्वां हि विषयासक्तमविभावितराजकार्यं प्रभुमयोग्यं

मन्वानाः प्रजास्त्यक्त्वाऽन्यत्र गच्छन्ति. संयोगितापि लावण्यवती तारुण्यसम्पन्ना स्यान्नाम तथापि विषयोपभोगस्तदासक्तिश्च न नः क्षत्रियाणां प्रधानं कर्म. क्षत्रियजातिः खलु दीनानां पालनाय धर्मरक्षणायाऽस्मिञ्जगति भगवता परमात्मना निर्मितेति सर्वाणि शास्त्राणि वदन्ति. यद्यपि सन्ति नाम धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्थास्तथापि धर्मादीनां त्रयाणामविरोधेन सेव्यमानः कामः पुरुषार्थतां भजते न विरोधेन. अन्यथा कामासक्ताः पशवोऽपि पुरुषार्थकारिणः स्युः. तद्विरमास्मादनर्थकारिणः कामोपभोगात्. पश्य च दीनानां प्रजानां दुर्दशां. एष केवलं कृतान्त इव सत्वरमागच्छति तव राज्यमपहर्तुं यवनाधिपः. तत्सन्नाहय सेनां. न खलु तव पूर्वजास्त्वमिव विषयपंके लुठन्तः पार्वणचन्द्रधवलां कीर्तिं संपादयामासुः. तद्विषयोपभोगलालसां विहाय सत्वरमागत्य कर्तव्यं विचारयेति.

स तु स्वामिभक्तश्चतुरः सेवकोऽन्तःपुरनीतिं सम्यक् जानन् दासी नाम भूत्वा संयोगिताविलासमन्दिरमविशत्. क्रमेण परमचातुर्येण संयोगितायाः प्रिया दासी बभूव. एकस्मिन्दिने पाटलीपुष्पपरिमलामोदिते निर्मले जले चिरं विहृत्य तौ श्रान्तौ शुकरंभासंवादं शृण्वन्तौ द्रोण्यामतिष्ठताम्. अत्रान्तरे प्रकृष्टं शीतमसहमाना संयोगिता ततो निर्गत्य वस्त्रान्तरं परिधातुं स्वविलासमन्दिरं जगाम. पृथ्वीराजश्च सुखेन शीतं सहमानस्तत्रैव तस्थौ. तदानीमेव सा चतुरा दूती तत्पत्रं पृथ्वीराजसन्निधावक्षिपत् अवदच्च—स्वामिन्? इदानीमेवेतो महता वेगेन धावतः शुकस्य मुखाद्गलितमिदं पत्रमिति. पृथ्वीराजो-

ऽपि तत् सत्यं मन्वान उद्घाट्य यावत्पश्यति तावत् सर्वमेव वृत्तमवागच्छत्. सा च दासी कृतकृत्या संयोगितायाः कोपं परिजिहीर्षुस्तस्मिन्नेव क्षणेऽन्तर्दधे. पृथ्वीराजश्च सर्वं तत्पत्रमनुवाच्य खिन्नो मनस्यकरोत्–अहो ! मौढ्यं मे. रात्रिंदिवं विषयकर्दमे लुठता मया कर्तव्यमेव न कृतमिति न किंतु सुहृदोऽपि विमनीकृताः. मदीयैः पितृपितामहैः पुत्रवत् परिपालिताः प्रजा मदीयं दुर्वृत्तमवलोक्य भीता अन्यत्राश्रयार्थं गच्छन्ति. तदेतत् मदीयं वृत्तं पश्यन्तः स्वसुकृतैः संपादितेषु दिव्यलोकेषु तिष्ठन्तो मदीयाः पूर्वजाः किं मां वदन्ति? एष चाकृत्रिमस्नेहशाली द्वितीयं हृदयमिव मे सुहृत् समरसिंहो मदीयराज्यरक्षणार्थं ससैन्यमागत्य द्वारि दशदिनपर्यन्तं तिष्ठति, तथाप्यहं पापी तद्वार्तां न जानामि. धिङ्मां मित्रावमानिनं. विषयविषोपभोगमूढमतिरहं स्वकर्तव्यमपि व्यस्मरम्. तदिदानीमेवाहं मौलान् प्रधानामात्यानाहूय चितोडाधिपं सत्कर्तुं प्रयतिष्ये. ततस्तदनुमत्याऽन्यत्र गतान् प्रजाजनानाश्वास्य तान् स्वस्थानापन्नान्विधाय मदोन्मत्तं तं भूयोभूयः पराभूतं यवनराजं समूलमुन्मूलयिष्यामीति.

एवं विचिन्तयत्येव सति राजनि सकलालंकारालंकृतशरीरा संयोगिता सलीलमागत्य-नाथ? किं न सुखयति एष प्राभातिको मलयवातः? किमद्य न स्पृहयसि गण्डूषजलं मदंगे त्यक्तुं? किं नोत्सहसे परिहासैर्मां कोपयितुं? किमिति अगाधचिन्तामग्नो लिखितइवाभासि? प्राणनाथ? केन पापिनाऽसौ मम विहारः कलुषीकृतः? किमिति प्रतिदिनमिवाद्य हृदयग्राहिभिः प्रेमरसमयैर्भाषणैर्नानुगृह्णासि

भवान्? मदीयेन स्खलितेन कुपितः किं? यद्येवं तदा शिरसा प्रसादयामि! एषा संयोगिता त्वदेकजीविता त्वदीयप्रेमालापान्न विना न जीविष्यतीति सार्वजनीनं. किमेतावदेव मे भाग्यमिति वदन्ती अश्रुपूर्णलोचना तं तिर्यक्पश्यन्ती तस्थौ.

पृथ्वीराजश्च तां प्राणप्रियामस्थाने दुःखाकुलां वीक्ष्य दुःखितः सजवं हस्ताभ्यामाश्लिष्य कौशेयवस्त्रेण नेत्रे परिमृज्यावदत्-कान्ते! अहं चान्यचिन्तासक्त आसम्. त्वया सह चिरं विलसता मया ऽत्रागत्य दशदिनपर्यन्तं निवसन् राजा सगरसिंहो न ज्ञातः. इदं च महदनिष्टं संवृत्तं. स च महंमदधर्मानुसारी गिझनीपतिर्मां विलासमग्नमवगम्य मदीयं राज्यमपहर्तुमागच्छति. तदधुना विलासा नोचिताः. सखि! नाहं त्वया सह विलासे संजातोद्वेगः, किंतु शत्रुषु राज्यापहारेच्छया समागच्छत्सु सत्सु विषयविलासा नोचिताः. तत्कानि दिनानि विलासांस्त्यक्त्वा शत्रवः पराजेयाः. पश्चात्पुनरपि पूर्ववदानन्देन निःशंकं विलसिष्यावह इति.

संयोगिताऽपि क्षत्रियकन्यका सर्वमिदं न्याय्यं मन्वाना तमन्वमोदत. अचिरादेव पृथ्वीराजो द्वारपालानाहूय मौलानां प्रधानामात्यानामाव्हायनाय तान् प्रेषयामास.

(२)

द्वारपालैर्निवेदितागमननिदाना राजाज्ञामनुसृत्य ते प्रधानामात्याः पृथ्वीराजसन्निधावागच्छन्. तानवेक्ष्य पृथ्वीराजोऽवदत्—प्रधानामा-

स्याः! एतावत्कालपर्यन्तं यदभूत्तत्सर्वमपि विस्मृत्यातः परं किंकर्तव्यं तद्विचार्यताम्. अहं हि मन्ये–प्रथमतः सर्वेभ्यः प्रजाजनेभ्यो विश्वासोत्पादनाय सर्वेषां नागरिकाणां महती सभा करणीया. तत्र मदीयमकृत्रिमं मित्रं चितोडाधिपः समरसिंहः सत्करणीयः. ततस्तत्रैव कर्तव्यविचारणाऽपि कार्येति. तदेतद्यदि भवतामनुमतं तदा शीघ्र-मेव भविष्यत्सभावृत्तं सर्वत्र घोषकैर्घोषयत. अहं च प्रमत्तः सभा-समयं प्रतिपालयंस्तिष्ठामीति.

ते चाकस्मादेव पृथ्वीराजस्य कर्तव्यदक्षतां विलोक्य विस्मिताः प्रतिहततर्कास्तथैव सर्वमकुर्वन् पृथ्वीराजश्च कतिपयसामन्तसमन्वितः प्रजवमश्वमारुह्य स्वयमेव समरसिंहस्य स्कन्धावारमगच्छत्. तत्र द्वारपालनिवेदितागमनः सत्वरमग्रे पादाभ्यां गत्वा तं राजर्षिं कर्तव्यदक्षं धर्मशीलं समरसिंहं गाढमाश्लिषत्. सोऽपि च परं विस्मितस्तं पृथ्वीराजं विषयलालसापिशाचिकामुक्तं पुनर्जातं मन्वान ईश्वरं मनसैवास्तौत्. निजगाद च–वयस्य! पृथ्वीराज! अद्यापि भारतवर्षस्य भागधेयं समीचीनमेवास्ति. अद्यापि रजपूतरमणीनां पातिव्रत्याग्निर्न शान्तः, नापि धर्मशीलानां मुनीनां तपांसि नष्टानि. यतो विषयसागरतलमग्नो भवान् स्वकर्तव्यविधानाय पुनरपि पूर्ववद-वस्थितः. पृथ्वीराज! त्वादृशस्य पुरुषपुंगवस्य यद्योग्यं तदेव कुरु. अन्यथा कीटका अपि विलासोपभोगान् कुर्वन्तः किं न स्तुत्यहः! अधुना चास्माभिरप्रमत्तैः सम्यक् सेनां सन्नाह्य व्यूहरचना कार्या. इदानीमेवागतो मदीयश्चारः समीपमागतं शत्रुं निवेदयतीति. पृथ्वीराजोऽपि तदीयमिममुपदेशममृतमेव मन्वानः सत्यत्वेन जग्राह.

वृत्ताकुशलप्रश्नः सायं सभागमनार्थं चितोढाधिपमामंत्र्य पृथ्वीराजः स्वनिवासं प्रत्यागच्छत्.

अचिरादेव च भोभो सभ्या नागरिकाः! युष्मत्स्वामी पृथ्वीराजो युष्मानाज्ञापयति–एष सप्तकृत्वः पराजितः शहाबुद्दीननामा यवनराजः पुनरपि योध्दुमागच्छति. अस्मदीयाश्च केचन तस्य सहायाः. तत्साम्प्रतं किं विधेयमिति विचारयितुं सायंकाले महती सभा क्रियते. तदर्थंच सर्वैरपि भवद्भिरागन्तव्यमिति.

निशम्य चेमां घोषणां सर्वेऽपि नागरिका आश्चर्यमग्ना आनन्दोल्लसद्वृत्तयः प्रस्फुरद्बाहवो विहितदिनकृत्यास्तं सभासमयं प्रतिपालयामासुः. अचिरादेव चानन्तबन्दिजनस्तुतकीर्तिः सकल–सामन्तचक्रवालमध्यवर्ती तारागणमध्यगतो विधुरिव प्रकाशमानो हस्तिस्कन्धगतः पृथ्वीराजः स्वनिवासप्रासादान्निर्गत्य सर्वेषां प्रजाजनानां प्रणामान् गृण्हन् क्रमेण सभास्थानमाजगाम. तदानीं समरसिंहोऽपि सभामागतस्तेन पृथ्वीराजेन सममेकासने समुपाविशत्. तौ च महाप्रबलौ केसरिणाविव नराधीशावेकत्रोपविष्टौ वीक्ष्य दिल्लीनगरवासिन आनन्देन सिंहनादान्विससृजुः. पृथ्वीराजोऽपि स्वयं समरसिंहस्य सत्कारान्विधाय कृतज्ञतां प्रादर्शयत्. स्वसेनापतिमाहूय सेनासन्नाहार्थमाज्ञापयत्. सर्वेऽपि प्रजाजनास्तेन राजदर्शनेन संतुष्टाः स्वस्वगृहेषु महोत्सवांश्चक्रुः. आनन्दसूचकान् पटहान् सर्वत्रावादयन्. तेन च महान् कोलाहलोऽभवत्.

## ( ३ )

एवं महोत्सववाद्यानां महति कोलाहले प्रचलिते सति राजप्रासादस्य मध्यचतुष्कवर्तिनी महती शिला द्विधाऽभवत्. ततश्च जटाभारधारी, रुद्राक्षमालाधारी, रक्ततरनयनः, हस्ताग्रेविलसत्करालनग्नखड्गः, नरकपालभूषितद्वितीयहस्तः, शंकरनामघोषकारी वीरभद्र आविर्बभूव.

तं च भयंकरस्वरूपं वीक्ष्य पृथ्वीराजः साष्टांगं प्रणिपपात. परन्तु स न पृथ्वीराजं किंचिदप्यभाषत. ततः शिवभक्तः समरसिंहस्तमनमत्. स्वीकृत्य च तदभिवादनं तूर्ण्णींस्थितं तं वीरभद्रं देवीकृपाशाली चन्दकविः 'अस्ति कश्चन विशेषः' इत्यपृच्छत्. तदानीमेव स घोरघोष उच्चैः-अहमस्मि वीरभद्रः. परमेश्वरेण सदाशिवेन दक्षयज्ञविध्वंसार्थमुत्पादितः. तं च यज्ञं ध्वंसयित्वा कृतकृत्यः सदाशिवात् 'यो हि तव निद्रां भेत्स्यति तस्य कुलक्षयो भविष्यति' इति वरं लब्ध्वाऽत्र सुखेनाशेय. प्राभातिकेन वाद्यकोलाहलेन मम निद्रा भिन्ना. तेन च तव राज्यं नंक्ष्यति नैतावदेव किन्तु तव कुलक्षयोऽपि भविष्यति. योऽयं शहाबुद्दीनां यवनस्तव राज्यमपहर्तुमागच्छति स च विजयीभूय त्वां बन्दिनं करिष्यति. ततः स क्रूरकर्माऽस्य दिल्लीनगरस्य राजा नाम भूत्वा भयंकराणि कृत्यानि करिष्यति. तं च जित्वाऽन्य एव मोंगलकुलसंभवो यवनो राजा भविष्यति इति.

इमं भाविनमनर्थं वीरभद्रमुखान्निशम्य संजातदुःखः स पृथ्वीराजः स्वप्रजानां दुःखं भविष्यतीति मनसि कुर्वन्नश्रूण्यमुञ्चत्. तमश्रूणि मुचन्तं वीक्ष्य वीरभद्रः सहासमाह—राजन्! अद्यावधि ये खलु रामचन्द्रादयः परमात्मावताररूपा राजानः संवृत्तास्तेषु कस्य हस्ते खलु इयं पृथिवी नियमेन स्थिता? न कस्यापीति प्रत्यक्षं! तदवश्यं भाविन्यर्थे दुःखविधानमनुचितं. मानवो हि क्षणिकान्विषयान् नित्यान् मन्वानस्तेषां क्षये वृथा शोचति. स शोक एव मानवस्यायुर्न्यूनीकरोति. तद्विरमास्मादकारणदुःखकरणात्. एषा हि जगतो रीतिः. यदेकस्य विषयस्यापहारे यस्य स विषयः स शोचति येन च लब्धः स मोदते. तस्मादुदासीना एव विद्वांसोऽस्मिन्विषये इति. उक्त्वा चेत्थं स वीरभद्रस्तिरोदधे. राजा च खिन्नः स्वमन्दिरमगात्. सर्वेऽपि प्रजाजनास्तस्य वृत्तस्य श्रवणनात्यन्तं दुःखाकुला बालका इव भुवि निपत्य रुरुदुः. अन्ये धनिकाश्च स्वधनस्य रक्षणाय नानाविधानुपायानुपायुञ्जत. कुलीना जनाः स्वस्त्रीणां तथा भगिनीनां शीलरक्षणाय स्थलान्तरमकुर्वन्.

एवं व्यग्रेषु सकलनागरिकेषु अस्वस्थचित्तः पृथ्वीराजः परं दुःखाकुलः शयनमंदिरं प्रविवेश. तत्र च प्राणप्रियां स्वसंकटम्लानकमलमुखीं चिन्ताक्रान्तां संयोगितामवेक्ष्य दुःखितस्तां सहसाऽऽश्लिष्य सलीलं जगाद. प्रिये! अवश्यं भाविनो भावा भवन्त्येव तत्र नास्ति मानवस्य प्रतीकारसामर्थ्यं. न खल्वस्मिन् मर्त्यलोके कश्चन चिरंजीवी, नापि सर्वदा सुखोपभोगी; ये खलु भगवत्सहाया नीति-

मूर्तयो नलादय आसंस्तेऽपि समये प्राप्तेऽपाराणि दुःखान्यनुबभूवुः तदा नः क्षुद्राणां का कथा. तस्मादगणयित्वोदर्कं यावच्छक्ति सत्कर्माचरणायमेव. फलं तु दैवाधीनमिति.

साऽपि सती तदीयमिदं भाषणं निशम्य शान्तोद्वेगा सुखेन सुष्वाप. अचिरादेव च नीचोत्तमभावरहिता भगवती सुषुप्तिस्तामात्मवशां चक्रे. पृथ्वीराजस्तु नानाविधकल्पनाभिः संतप्तमस्तको न चिरादपि निद्रां लेभे. ततश्च प्राभातिकेनानिलेन शिरसि स्पृष्टः स्वल्पां निद्रां लेभे.

तदानीमेव भयंकरं स्वप्नं वीक्ष्य भीतः साक्रोशं जागर्तिस्म पृथ्वीराजः. तस्य च महताऽऽक्रोशेन प्रथमं प्रवुद्धा सती संयोगिता तं जागरयतिस्म. तं चाश्रुपूर्णनयनं शुष्कवदनं घर्मकणांकितगात्रं भीतमिव सर्वतः कातरीभावेन पश्यन्तं स्वकान्तं पश्यन्ती संयोगिताऽपृच्छत्. नाथ! किमिति त्वमुच्चैराक्रोशः? कुतोऽयं त आकुलीभावः? इति. सोऽपि चेदानीं लब्धस्वास्थ्यः शनैःशनैरब्रवीत्—प्रिये! अद्य खलु मया महान् भयंकरः स्वप्नो दृष्टः. स चेत्थम्. अहं च त्वया सह सुरम्ये महत्यारामे समुपविष्टोऽतिसुन्दरीं तरुणीमपश्यम्. सा च सहासं किंचित्कालं त्वया सह संलपन्ती तस्थौ. अत्रान्तरे संचारी पर्वत इव स्थूलवपुः कृष्णः रोषकषायितनेत्रयुगलो हस्ती मां तिर्यक् प्रहृत्य तां सुन्दरीं गृहीत्वाऽन्यत्र ययौ. तस्य च तीक्ष्णेन दन्तप्रहारेणाहं मृतोऽशोचम्. इति.

प्रकृतिसरला भीरुः सा संयोगिता तं स्वप्नमनिष्टदर्शकं मन्वाना मुक्तकण्ठं रुरोद प्रभाते च राजपुरोहितमाहूय राजा सर्वं स्वप्नं न्यवेदयत्. स तु यथाशास्त्रं तस्य शान्तिमकरोत्. स्वयमपि विद्वद्भिः पण्डितैः समं जयार्थमनुष्ठानमारभत.

( ४ )

पृथ्वीराजश्च तं शहाबुद्दिनं गिझर्नपतिं समीपमागतं निशम्य दुःस्वप्नैर्निहतोत्साहोऽपि जात्या क्षत्रियतया महान्तमुत्साहमवलंब्य स्वसेनासन्नाहमारभत. प्रथमतो ये खलु परमामोदेन स्वमातृभूमेस्तथा स्वभगिनीनां स्वातंत्र्यशीलयो रक्षणाय स्वयंबद्धपरिकराः समागच्छं-स्तान् महत्या प्रीत्या स्वसेनायामस्थापयत्. ततश्च सर्वानपि पदा-तीन् स्वयं वीक्ष्य तेभ्यः समीचीनान्यस्त्राणि पारितोषिकाणि च विततार. सादिमण्डलं च युद्धेऽत्युपयोगीति मन्वानः कुशलिभ्यः सादिभ्योऽत्युत्तमानश्वांस्तथा सुतीक्ष्णान् भल्लान् खड्गांश्च ददौ. एवं शतघ्नीविभागानपि सुव्यवस्थितानकरोत्.

एवं सेनां सन्नाह्य तस्या विभागान्विधाय तेषु परं विश्वास-पात्राणि युद्धविशारदान् व्यूहरचनाकुशलान् मौलानधिकारिणो न्य-युंक्त. तेभ्योऽप्यतिमूल्यानि पारितोषिकाणि वितीर्य तान् स्वामि-भक्तानकरोत्.

एवं सेनां व्यवस्थाप्य स्वराजधानीरक्षणव्यवस्थामप्यकरोत्. प्रथमतो राजधानीनगररक्षणाय स्थाने स्थानेऽतिशूरान् सैनिकान्

अस्थापयत्. तथैव प्रवेशद्वारेषु द्विगुणितान् यामिकान्विधायाज्ञातस्य परकीयस्य प्रवेशं सर्वथा न्यषेधयत्. एवं नगरमध्ये निवासिजनभोजनार्थं महान्तं धान्यसंचयमकरोत्. अन्येषामप्यावश्यकानां वस्तूनां सर्वाण्यपि क्रीडास्थानानि सैनिकनिवासार्थं कल्पयामास. ये खलु नटादयः सकललोकचित्तरंजका जना आसंस्तान्नगराद्बहिर्निष्कासयामास, याश्च वारयोषितस्ता अपि. रात्रिंदिवं नूतनेभ्यः शूरेभ्यो युद्धकलाशिक्षणं ददौ. ये खलु महान्तो जलसंचया आसंस्तान् शत्रुपक्ष्यः कश्चन गूढश्चारो मा दूषयत्विति तत्रापि निरीक्षकान् स्थापयामास. सर्वेभ्यश्च नागरिकेभ्यो धान्यस्य व्ययं मितं विधातुं समुपादिदेश. स्वयं चाश्वमारुह्य सर्वाण्यपि मर्मस्थानान्यपश्यत्.

ततश्च भीष्ममिव सत्यप्रतिज्ञं, द्रोणमिव शस्त्रास्त्रविद्याकुशलं भीममिव महाबलं, अर्जुनमिवामोघबाणं, श्यालं चामुण्डरायं प्रणिपत्य जगाद. तात ! चामुण्डराय ! मया च महदपराद्धं. दुष्टजनोक्तिविषमगरलदूषितमतिना मया न किंचिदपि विचारितं. त्वं च बंदिशालायां स्थापितो महतः क्लेशाननुभावितोऽसि. तदेतत्सर्वं शल्यमिव मां पीडयति. धन्यस्त्वं. यतो मदीयैरीदृशैर्दुर्वर्तनैः पीडितोऽपि न हाहुलीरायवन्मन्नाशार्थमचेष्टथाः. नापि मदीयशत्रूणां सहायोऽभूः. क्षत्रियश्रेष्ठ ! चामुण्डराय ! एष समयो भयंकर इवाभाति, तदवशिष्टं कोपं विहाय साहाय्यं कुरु. एताश्च कन्यका यवनैराक्रांताः प्राणांस्त्यक्ष्यन्ति. तव भगिनी तत्पुत्रो रेणसी मां विहाय न स्थास्यतः. तत्त्वां शिरसा प्रसादयामि अस्मिन् युद्धे साहाय्यं विधातुमिति.

चामुण्डरायस्तु प्रकृत्यैव सरलो निष्पापस्तस्य पृथ्वीराजस्य विज्ञप्तिमाकर्ण्य सन्तुष्ट उवाच—राजन्! एताः खलु दैवस्य विचित्रा लीलाः. न तत्र केनाऽपि आदरः करणीयः नापि द्वेषः. किंतु समागतानां सहनं. अस्तु. यद्यपि च यावज्जीवमहं लोहशस्त्रं न धरिष्यामीति प्रतिज्ञामकरवम् तथापि अन्येनैव शस्त्रेणाहमस्मिन् युद्धे तव साहाय्यं करिष्यामि. नैतावदेव किंतु यावज्जीवं योत्स्ये, न पराङ्मुखो भविष्यामि. नापि शत्रोः सहायो भूत्वा नरकातिथिरिति.

५

एवं सर्वं व्यवस्थाप्य पृथ्वीराजः शहाबुद्दीनेन समं योद्धुं स्थलं निर्णेतुं स्वसामन्तानां महतीं सभामकरोत्. तत्र च चामुण्डरायप्रभृतयः सर्वेऽपि सामन्तास्तथा चितोडनराधीशप्रभृतीनि मित्राण्यपि स्वस्वस्थानमलमकुर्वन्. तत्र पृथ्वीराजः सर्वान् सामन्तानुद्दिश्य जगाद. सामन्तश्रेष्ठाः! गिझनीपतिः शहाबुद्दीनः प्रतिदिनं समीपमागच्छति. स च यद्यकस्मादागत्यास्मानस्मिन् दुर्गे प्रतिरुन्ध्यात्तदा महदनिष्टं भवेत्. यतो बलिष्ठोऽपि राजा नियंत्रितो हस्तपादं प्रसारयितुमप्यशक्नुवन् सुजेयो भवति. यद्यपि नाम दुर्गाश्रयः कर्तव्य इति शास्त्राज्ञाऽस्ति. तथापि सा हीनबलस्य परान् जेतुमशक्नुवतः कृते. नतु विजयिनः. अस्माभिस्तु सप्तकृत्वः पराजितः शहाबुद्दीनः. क्व च ते गोमांसभक्षणपापमलिना यवनाः, क्वच मदीयाः शूराः क्षत्रियाः. तद्दुर्गरक्षणार्थं किंचित्सैन्यं निधायावशिष्टं कृत्स्नमपि

सैन्यं गृहीत्वा सुस्थले कृतस्कन्धावारा वयं तं प्रतिपालयिष्यामः. दुर्दैवतः पराजितानपि नोऽवेक्ष्य क्षत्रियरमणीनां स्वकर्तव्यपालनाय पर्याप्तोऽवसरोऽपि प्रदत्तो भवेत्. तद्यदि सर्वेषामिदमनुमतं तदा महति प्रत्यूषे सर्वैरपि सामन्तैः स्वसेनया समं यमुनातीर आगन्तव्यं. सप्तघटिकासमये शुभो मुहूर्तो राजपुरोहितेन दत्तोऽस्ति. तस्मिन् समये राजपटहध्वनिर्भविष्यति तदानीं वयं सर्वे गमिष्याम इति.

इदं च तद्भाषणं निशम्य सन्तुष्टाः सर्वेऽनुमोदन्तेस्म. राजा च सभां विसर्जयित्वाऽन्या अपि पत्नीर्मिलित्वा प्राणप्रियायाः संयोगिताया मंदिरमाजगाम. संयोगिता च क्षत्रियकन्यकाऽपि स्वप्राणप्रियस्य युद्धार्थं प्रयाणमवलोक्य नितान्तं दुःखाकुला बभूव. सा च कुतश्चिदपि कारणादिदं पतिदर्शनं चरममेव मन्वानाऽत्मानमधन्यमशोचत्. तथापि सती सा प्रभाते प्रयास्यन्तं सकलगुणमण्डितं सम्राजं पतिं रात्रौ नानाविधैर्विलासैः सिषेवे. प्रथमतः सा तदर्थं नानाविधानि सुरुचिराणि पक्वान्नानि स्वहस्तेन निर्माय तमभोजयत्. पृथ्वीराजोऽपि स्वप्राणप्रियायाः संयोगितायाः परिश्रमं सफलीकर्तुमिच्छुः पर्याप्तमभुंक्त. भुक्तवते तस्मै हस्तप्रक्षालनार्थं पाटलीपुष्पजलं वितीर्य स्वयंविरचितां ताम्बूलवीटिकां ददौ. स्वयमपि किंचिद्भुक्त्वा तत्सेवार्थं शीघ्रमेवागच्छत्.

अतिकोमलाभ्यां स्वहस्तकमलाभ्यां तस्य पादांबुजे मर्दयन्तीं खिन्नवदनां संयोगितां स्वसमीपमाकृष्य तदधरामृतं पिबन् जगाद पृथ्वीराजः–कान्ते? इदं तेऽमृतादपि मधुरं देवानामपि दुर्लभमध-

रामृतपानं चरमं वेति संदिहानो महति दुःखसागरे निक्षिप्तोऽस्मि. तदागच्छ. अलं सेवया. अहं चेदं पर्याप्तं पीत्वाऽत्मानं वितृष्णं करोमीति. अचिरादेव तौ चिरविलसनखिन्नौ निद्रादेवी अनुजग्राह.

अथ विकसितकुसुमगंधपरागधूसरेषु तडागलहरीसहचरेषु मन्दमन्दवाहिषु पवनेषु; विरलप्रकाशेषु प्रदीपेषु; स्वस्वकर्मव्यग्रेषु विद्वत्सु भक्तगणेषु; कलंकलांछने, अपरादिगंगनासंगपाण्डुरे भगवति चन्द्रमसि दूरमपसरति; क्षीणतेजस्कासु तारासंहतिषु; अर्धविकचकोरकगुच्छालंकृतासु लतासु; साधुजनाधिष्ठितेषु नदीतीरेषु; जनदर्शनभीतेषु चौरकुलेष्वपसरत्सु; परस्परवियोगदुःखाकुलेषु तरुणयुग्मेषु; यमुनातरंगसंगिप्राभातिकपवनपरिपूतेषु सकलेन्द्रप्रस्थनागरिकेषु; संध्यारागरक्ते प्राग्दिशो वदने; पूर्वसंकेतमनुसृत्य प्राथमिको युद्धप्रमाणपटहध्वनिराबभूव.

तं च सकलभुवनाण्डविस्तृतं, बधिरितसकलश्रवणपुटं ध्वनिं निशम्य तौ संयोगितापृथ्वीराजावजाग्रताम्. त्वरितमेव च स पृथ्वीराजः स्नात्वा कृताह्निको युद्धोचितं वेषं परिधातुमुपचक्रमे. संयोगिताऽपि तत्र सहकारिणी बभूव. अतिप्रेमवशादनिष्टमाशंकमानायाः सत्याः संयोगिताया नेत्रकमलाभ्यामश्रूणि पृथ्वीराजपादयोरपतन्. समरकेसरी पृथ्वीराजोऽपि तत्समावस्थः समभवत्. अत्रान्तरे पुनर्द्वितीयो राजपटहध्वनिरभूत्. तं च निशम्य पृथ्वीराजो विवेकन्यूनीकृतशोकः सलीलमुत्थाप्य हस्ताभ्यां संयोगितां गाढमाश्लिषत्.

अवदच्च–प्रिये ! त्वमसि क्षत्रियकन्यका. न केवलं वीरसुता किंतु वीरपत्न्यापि. तद्विहाय शोकमानन्देन युद्धगमनार्थमनुमोदस्व. नह्य-स्मिन्समये वीरांगना इतरवदश्रूणि मुंचन्ति किंतु स्वपतीन् मधुरैर्भा-षणैरुत्तेजयन्ति. तदुत्तिष्ठ. त्वं हि यशस्विनी आराध्यदेवता. त्वं हि मे स्वामिनी. त्वमेव मे राज्यलक्ष्मीः. त्वया प्रदत्तेन खड्गेनाह-मवश्यं यशस्वी भविष्यामि. तदुत्थाय मदीयं खड्गं मदीयपट्टबन्धे स्थापयेति.

पृथ्वीराजस्येदं भाषणं निशम्य साऽपि क्षत्रियकन्यका सत्वर-मुत्थाय स्मेरमुखी स्वहस्तेन खड्गलतिकामादाय तदीये पटबन्धे ऽबध्नात्. अभाषत च-प्राणनाथ ! यद्यप्यहमस्मि वीरकन्या वीरपत्नी च तथापि अद्यापि अपक्वबुद्धिः संसारविषयोपभोगेऽवितृष्णा नाथं युद्धार्थं प्रस्थितमवलोक्य प्रेम्णाऽनिष्टमाशंकमाना किंचिदस्वस्थचि-त्ताऽभवम्. वस्तुतस्तु सांसारिकविषयोपभोगेन न पुरुषार्थः सेत्स्यति. तांश्च यथाशक्ति पश्वादयोऽपि सेवन्त एव. अस्मिन् मृत्युलोके बलप्रधाना क्षत्रियजातिः केवलं पशुवद्यथेच्छं विषयभोगायैव न निर्मिता किंतु न्यायेन प्रजापालनार्थं. एते च दैत्या इव मदान्धा यवनाः दुर्बलान् पीडयित्वा स्वविषयवासनां पूरयन्ति. तत्तेषां दण्ड आवश्यकः. एतादृशपवित्रकार्यार्थं मे पतिर्गच्छति. तत्प्राणनाथ! इदं पवित्रं कार्यं सम्यगनुष्ठेयं. तत्र च स्वर्गगमनं श्रेयो न पुनरननुष्ठीय वाऽकीर्तिमधिगम्य वा प्रत्यागमनं. तस्मिन् समये मदीया चिन्ता न कार्या. या खलु युष्मदीयैः परमपवित्रैर्गुणैराकृष्टा पितरमपि

त्यक्त्वा समागता साऽहं युष्मान् स्वर्गताञ्निशम्याऽपि अत्र स्थास्यामि, किंवा सुरांगनाभिः समं युष्मान्विलासयिष्यामीति कल्पनमेवाशक्यं. मदीयदुर्दैवतो यदि यूयं स्वर्गं गन्तुमारप्स्यध्वे तदाऽर्धमार्ग एव समागत्य युष्माकं यावच्चन्द्रदिवाकरं सहचारिणी भविष्यामि. मयाऽपि चेतो दूतद्वारा शीघ्रमेव साहाय्यार्थं विज्ञप्तः पिता त्वरितमेवागमिष्यतीति मन्ये. तदस्मिन् युद्धे यशोलाभायेश्वरं ध्यात्वा यशस्विनीमिमामसिलतां बध्नामि. प्रतिजानामि च —यावदितो युद्धार्थं गतो मदीयः प्राणनाथो विजयीभूत्वा न प्रत्यावर्तेत तावदहं केवलं प्राणधारणार्थं पयो निपीयोपवासं करिष्यामि. निवृत्तेन च त्वया सममन्नं ग्रहिष्यामीति इति.

पृथ्वीराजश्च परमप्रियं स्वादु पाथेयमिव हृदयहारि तत्संयोगितायाः भाषणं निशम्य सन्तुष्टस्तां स्वबाहुवलयेन गाढमालिलिंग. अत्रान्तरे तृतीयोऽपि पटहध्वनिरभवत्. तं च निशम्य पृथ्वीराजः 'इदानीमनुजानीहि मां गमनाय' इति जगाद. संयोगिताऽपि 'गच्छतु नाथः शत्रुविजयाय. सर्वा अपि कुलदेवतास्त्वां रक्षन्तु इति कथमपि अस्फुटाक्षरमनुमुमुदे.

पृथ्वीराजस्तुहिनजलकणावसिक्तं कमलमिव नेत्रांभःक्लिन्नं मुखमाचुम्ब्याश्वमारुरोह. क्षणात्तत्स्थलं प्राप.

---

# द्वादशो गुच्छः

१ उभयोः सेनयोर्युद्धम्
२ पृथ्वीराजस्य बन्दिवासः
३ जयचन्दस्य स्वर्गवासः
४ आर्यभूमौ दुःखदाः प्रसंगाः
५ चन्दकवेर्गिझनीगमनम्
६ शब्दवेधः, गिझनीपतेर्मृत्युः
७ उपसंहारः

( १ )

एवं संयोगिताया आज्ञां गृहीत्वा पृथ्वीराजो यदा स्वसेनानिवेशमागच्छत्तदा सर्वेऽपि सामन्ताः सहर्षा अभवन्. ते च साञ्जलिबन्धं तस्मै नमस्कृत्य नियोगं प्रतिपालयामासुः. पृथ्वीराजश्च स्वमंत्रिभिस्तथा चितोडाधिपेन समरसिंहेन समं संमंत्र्य गंगायमुनयोर्मध्यगतं पानपताख्यं सुप्रसिद्धं रणक्षेत्रं युद्धभूमिं निरणयत्. निर्णीय च तत्र सेनानयनाय सेनापतिमाज्ञापयामास.

अचिरादेव सा सेना भगीरथरथानुसारिणी गंगेव पृथ्वीराजानुगामिनी निश्चितं स्थलं प्राप. आगत्य च क्लृप्तनिवासा तस्थौ. अत्रान्तरे विदितसर्ववृत्तः कनोजाधिपतिर्जयचन्दोऽपि स्वजामातृसाहाय्यार्थं स्वकीयां कृत्स्नां सेनां गृहीत्वा तत्रागन्तुं निरगात्. एवं स्वामातृभूमेस्तथा स्वस्वातंत्र्यस्य तथा स्वधर्मस्य रक्षणार्थं मिलितैरखिलैः क्षत्रियैस्तथा समरसिंहपृथ्वीराजप्रमुखैः क्षत्रियकुंजरैः सा सेनाऽद्वितीयाऽभवत्. सर्वे च यथायोग्यस्थानापन्ना अप्रमत्ताः सर्वाणि कार्याणि कुर्वन्तः शहाबुद्दीनागमनं प्रतिपालयामासुः

शीघ्रमेव स मूर्तिमान् यमराज इव भयंकरश्मश्रुलमुखैः, तीक्ष्णखड्गभीषणकरैः, विचित्रवेषैः, ज्ञाननाम्नाऽपि विहीनैः, अनाघ्रातभूतदयैः, अनास्वादितमानवपशुभेदैः, सुरापायिभिः, परकान्ताकनकलोलुपैः, विशालाश्वविराजिभिः, क्रोधरक्ततरनयनैः, भक्ष्यलोलुपैर्व्याघ्रैरिव, मनुष्यसंहारार्थमवतीर्णैर्यमकिंकरैरिव सैनिकैः समं भारतवर्षस्य धूमकेतुरिव भारतस्वातंत्र्यदेव्या अपहारको राहुरिव, मूर्तिमांल्लोभइव, आर्यधर्मस्य भक्षकः काल इव स महंमदधर्मानुयायी गिझनीपतिः शहाबुद्दीनोऽक्षिपात्रमभूत्. तं च वीक्ष्य सर्वे क्षत्रिया योध्दुं परमुत्सुका अभवन्. स तु शान्तमनसा स्वसेनानिवेशं यमुनाया अपरतीरे कल्पयामास. तदानीं तु तौ द्वौ सेनानिवेशौ यमुनोभयतीरवर्तिनौ यमुनालाभार्थं कलहायमानौ पूर्वापरसमुद्राविवाशोभेताम्. श्वो युद्धं भविष्यतीति मत्वा सुप्तेषु क्षत्रियवीरेषु धर्मशीलेषु अधर्मशीलः स शहाबुद्दीनस्तूष्णीं रात्रौ घनान्धतमसप्रावृते सकलभूवि-

भावे कृत्स्नेन सैन्येन समं परतीरमाययौ. तत्र कृतनिवासो कृत्स्नस्य सैन्यस्य दुर्भेद्यान् व्यूहान्विरचयामास.

अथ सकललोककर्मसाक्षिणि भगवति मरीचिमालिनि पूर्वाचलमारुढे सति, सर्वेष्वपि पक्षिगणेषु इदमलौकिकं युद्धं द्रष्टुमनिच्छत्स्विवान्यत्रगतेषु, विहितसकलान्हिककर्मा गोब्राम्हणान्नमस्कृत्य पृथ्वीराजः स्वहस्तिनमारोढुं प्रचचाल. तदानीमेव तदीयमपसव्यमक्षि अस्फुरत्. तच्चाशुभं मन्यमानः पृथ्वीराजः सचिन्तो बभूव. पुनश्चाग्रे शिवामपसव्यगामिनीं रुदतः कुक्कुरांश्च समीक्ष्य स युद्धविजये संदिग्धमतिरभवत्. तदानीमकस्मादेव सूर्यमण्डलं निस्तेजस्कमिवाभूत्. तदेतन्महदशुभचिन्हं मन्वानाः सर्वेऽपि क्षत्रियाश्चिंतातुरा अभवन्. पृथ्वीराजः शंकाकुलितचेताअपि महता धैर्येण जगाद. क्षत्रियश्रेष्ठाः! एभिरशुभलक्षणैर्जयः संदिग्ध इव मे भाति. तथापि प्रयत्नो न त्याज्यः, नः क्षत्रियाणामशुभं कुतः. यतो यदि जेष्यामस्तदा पृथिवीं पालयिष्यामः अन्यथा स्वर्गसुखं भोक्ष्यामहे. तत्सर्वैर्युष्माभिर्महता शौर्येण योद्धव्यमिति.

एवमुक्त्वा स्वहस्तिनमारुढेऽपरसूर्यइव तेजस्विनि पृथ्वीराजे सर्वे बान्दिन उच्चैः पूर्वजानां पितृणां यशस्तोमानपठन्. सहस्रशश्च पटहांस्तथागंभीरध्वनीभेरीरवादयन्. स शब्दस्तुमुलः सर्वानपि क्षत्रियवीरान् योध्दुमुत्साहयामास.

प्रावर्तत च तीक्ष्णखड्गाघातनिपतद्रुण्डसहस्राच्छादितभूविभागः, भयंकरोभयपक्षभटप्रतिमुक्तसिंहनादबाधिरितश्रवणपुटः भल्लक्षेपविदारितप्रतिभटोदरनिर्गतमांसपेशलः, प्रलयकाल इव परस्पराक्रमणनिहतानेकभटप्रेतमयः, शौनिकांगणमिव मांसपंकिलभूतलः, प्रफुल्लपलाशमयीं वनस्थलीमिव रुधिराक्तशरीरवीरव्यापृतः, स्वस्वधर्माभिमाननिर्गत 'जयजयमहादेव' 'दीन दीन' इतिवीरघोषणाभयंकरः, अनवरतनिपतच्छतघ्नीलोहगोलवृष्टिनृत्यत्कबंधसंकुलः, उन्मत्ताश्विकनिहन्यमानस्वपक्षजनः, निहतस्वामिमुक्तघोटकसाबाधोभयपक्षः, तीक्ष्णबाणाहतगंडस्थलप्रवहद्राधिरधारासिक्तगजचंक्रमणः, मध्यभागविराजमानहस्तिराजस्कंधप्रस्फुरत्सूर्यचिन्हांकितराजवैजयंतीकः, प्रतिभटशस्त्राघातनिहतजनोत्थापनव्यग्रसेवकजनः, जलपायिपिपासुयोध्दृगणसंकटितप्रपास्थानः, मृत्युलोक इव क्षणभंगुरदेहः, मोक्ष इवाविज्ञातदेहाभिमानः, सांख्यसिद्धांत इव पुरुषमयः, अविरलनिपतद्बाणभस्त्रायितवीरदेहः, स्वामिरक्षणतत्पराश्वगणः, अगणितस्वकीयपरकीयः, युध्यमानजनसंमर्दोत्थधूलिधूमरसूर्यमंडलः, महान् संग्रामः.

तत्र चातिचपलवाजिभिः सुलभक्षेपभल्लमण्डितैः, सुशिक्षितखड्गक्षेपैः, लक्ष्यवेधातिकुशलैः, शौर्यखानिभिः, स्वधर्मरक्षणतत्परैर्जाग्रत्स्वकुलाभिमानैः स्वातंत्र्यदेव्या निर्व्याजमुपासकैः, क्षत्रियश्रेष्ठैराक्रान्तास्ते यवनाः प्रथमतोऽत्यन्तं कातरा अभवन्.

किंच—यथाहि एते क्षत्रियाः स्वस्वातंत्र्यस्य तथा स्वस्त्रीणां पातिव्रत्यस्य कृतेऽयुध्यन्त न तथा ते यवनाः. ते च केवलं लोभिनः

परद्रव्यस्य परस्वातंत्र्यस्य चापहरणाय प्रयतमानस्य राज्ञः शहाबुद्दीनस्याज्ञामनुसृत्य. वाचकाः! योहि मानवो यत्कर्म स्वेच्छया करोति तस्य तद्यथा श्रेयस्करं भवति न तथा केवलं नियुक्तस्य तस्य तत्. क्षत्रियेषु यथा युद्धमस्माकमावश्यकं कर्तव्यं कर्मेति बुद्धिरासीत् तथा न महंमदीयानां. ते तु वेतनस्य तथा परद्रव्यापहारस्य च लोभेनानीताः तस्मादेव कारणादतितीव्रेण प्रथमाक्रमेणेन भीतास्ते महंमदीयाः. किंचित्पराजिता एव अभवन्. तांश्च पश्चान्निवर्तमान्निरीक्ष्य वर्धितोत्साहास्ते सर्वेऽपि क्षत्रियाः सिंहनादैः परस्परमुत्साहयन्तो महता शौर्येणायुध्यन्त.

( २ )

एवं बलिनः शौर्येण युध्यमानान् क्षत्रियानवेक्ष्य भीतः स शहाबुद्दीनः परं क्रुद्धो मनस्यचिन्तयत्—एते क्षत्रिया अधुनाऽपि पूर्ववदेव युध्यन्ते. एष च पापी हाहुलीरायो मामकथयत् विलासी पृथ्वीराजः प्रजाभ्यो नातिरोचत इति, तन्मिथ्येति भाति. यद्यस्मिन् समयेऽप्यहं पराजितो भविष्यामि तदाऽहं न जीविष्याम्येव. मदीयाः सामन्ताश्च मां निरर्थकं प्रजाहत्याकारिणं मन्यमाना घातयिष्यंत्येव. तदधुना येन केनाऽपि प्रकारेण विजयः संपादनीय एवेति. मत्वा चेत्थं स शहाबुद्दीनो महता क्रोधेन प्रतिनिवर्तमान् सैनिकानेव घातयामास. ते चेतोऽपि भीताः स्वप्राणरक्षणे निराशाः पुनरपि सधैर्यमयुध्यन्त. अत्रान्तरे कृतान्त इव महंमदीयानां अमोघशरसंधानः देवीभक्तश्चामुण्डरायो हस्तिस्कन्धगतः

स्वसमीपवर्तिनं पृथ्वीराजमवदत्—स्वामिन्! कः खलु मम बाणस्य प्रथमं लक्ष्यीकर्तव्यः. अहं तु मन्ये एष पापी यवनः शहाबुद्दीनः प्रथमं हन्तव्य इति. राजोवाच· तं शहाबुद्दीनं पश्चाद्धनिष्यसि. एष राजद्रोही हाहुलीरायः प्रथमं हन्तव्यः. तेन राजद्रोहस्य किं फलं? कथं वा तल्लभ्यत इति सर्वोऽपि जनो जानीयादिति. अनवसित एव पृथ्वीराजभाषणे स 'तथाऽस्तु' इत्युक्त्वा हाहुलीरायस्य हृदयमभिलक्ष्य तीक्ष्णं शरममुंचत्. तेन गाढं हृदये निहतः स हाहुलीरायस्तस्मिन्नेव क्षणे भूमौ निपपात. प्रभूतं रुधिरं च ववाम. अजहाच्च प्राणान्. ययौ च स्वामिद्रोहेण कृतघ्नतादोषेण च संपादितानशुभांल्लोकान्.

हाहुलीरायस्येमां दुर्दशामवेक्ष्यात्यन्तं भीतः शहाबुद्दीनः स्वजीवनेऽपि वितृष्णो महता धैर्येणायुध्यत. पृथ्वीराजोऽपि शहाबुद्दीनस्य कण्ठदेशमालक्ष्य तीक्ष्णं शरं मुमुञ्च. चामुण्डरायवत् सोऽपि अमोघबाणः किन्त्वस्मिन् समये भारतवर्षस्य दुर्दैवतो वाऽस्माकमभाग्यतो वा, परमेश्वरेच्छया वा स बाणश्च्युतलक्ष्यस्तस्य शहाबुद्दीनस्योष्णीषं गृहीत्वा सार्थको बभूव. यवनराजश्च तावतैवात्मानं बहु मेने. अमोघशरक्षेपस्य धन्विनः पृथ्वीराजस्य शरं लक्ष्यच्चुतमवलोक्यात्मनो जयममन्यत. पृथ्वीराजोऽपि स्वबाणस्य लक्ष्यच्युतिमवलोक्य खिन्नः स्वविजये सुतरां संदिदेह.

एवं संदिग्धोऽपि पृथ्वीराजो न युद्धोद्यमादुपरतः किंतु धैर्येण तथैवायुध्यत.

एवं सततं युध्यमानयोः क्षत्रियमहंमदीयसेनयोर्द्वे दिने व्यतीते. तृतीये दिने भगवान् भास्कर आरक्तमण्डलो मध्यनिपतितमहागर्तः कथमपि स्वव्यवसायमनुष्ठातुं पूर्वाचलमारुरोह. शहाबुद्दीनश्च रात्रौ सर्वान् स्वसामन्तानेकत्रीकृत्य तैः समं अद्य विजयो वा संपादनीयोऽथवा समरे देहावा विसर्जनीयाः इति निर्णीय युद्धभूमिमागच्छत्. पृथ्वीराजप्रभृतयः सर्वे क्षत्रियराजा अपि तथैव निर्णीय समागच्छन्. तेन तस्मिन्दिने युद्धमलौकिकं बभूव.

मध्यान्हकाले सर्वेऽपि यवना मिलित्वा क्षत्रियसेनामाचक्रमुः.तत्र चितोडनराधीशः समं कल्याणनाम्ना पुत्रेण समरभूमिमशेत. तथैव त्रयोदशसहस्रसंख्याकाः क्षत्रिया अपि. इमां वार्तां निशम्य पृथ्वीराजो मूर्ध्नि वज्रेण निहत इव मुमूर्च्छ. तं च मूर्छितमवलोक्य सर्वेऽपि सामन्ताश्चिंतातुराः संज्ञालंभने प्रायतन्त. तदानीं तस्य पृथ्वीराजस्य भगिनी पृथादेवी स्वपतेस्तथा स्वपुत्रस्य समरपातं निशम्य शोकविव्हला तद्वियोगदुःखं सोढुमात्मानमसमर्थं भावयन्ती चितामारुरोह. सर्वेऽपि सनातनधर्मानुयायिनः परधर्मानुसारिणश्च तत् खलु अगाधं स्वपतिप्रेम, अतुलशीलानामार्यस्त्रीणां पातिव्रत्यं विलोक्य सहसा तां प्रणिपेतुः. सा च कल्याणी पृथादेवी स्वपतिशरीरेण समं वन्हिमयीं चितां हंसतूलशयनमिवाधिरुह्य स्वर्गं जगाम. परकान्तोपभोगेन धन्यंमन्या अपि महंमदीयाः पृथादेव्या अलौकिकं पातिव्रत्यं विलोक्य विस्मयसागरे न्यमज्जन्. एवं किंचित्कालं विस्मृतवैरभावास्ते वीराः पुनरपि स्वव्यवसायं पर्यपालयन्.

अत्रान्तरे तार्तरखाननामकः कश्चन शहाबुद्दीनस्य परमप्रियः सामन्तः स्वसैनिकैः समं घोरं युद्धं व्यतानीत्. स च महता जवेन पृथ्वीराजं रक्षतः सामन्तान्निहत्य पृथ्वीराजसमीपमागच्छत्. स्वस्वामिन इमां दशामवलोक्य सर्वेऽपि क्षत्रियवीराः स्वामिरक्षार्थमागच्छन्. महंमदीया अपि तस्य सामन्तस्य साहाय्यार्थं. अतिसमीपमागतान् यवनांस्तथा क्षीयमानबलान् क्षत्रियानवेक्ष्य खिन्न आत्मनो दैवं प्रतिकूलं मन्यमानोऽन्तिमं प्रयत्नं चकार पृथ्वीराजः. पुनरपि महता वेगेन प्रचचाल युद्धवडवानलः. तार्तरखानश्च क्षीणबलान्निहतसैनिकान् सामन्तान् वीक्ष्य तीक्ष्णेन खड्गेनावशिष्टान् स्वामिभक्तान् स्वर्गं प्रेषयित्वा प्रजविनाऽश्वेन त्वरितं समीपमागत्य पृथ्वीराजाश्वं प्राहरत्. सोऽपि स्वामिभक्तोऽश्वो भाविनीं स्वस्वामिनः पृथ्वीराजस्य दुर्दशां द्रष्टुमसमर्थ इव तस्मिन्नेव क्षणे धरणितले निपपात. पृथ्वीराजोऽपि तेनोग्रेण यवनसामन्तेन राहुणा सूर्य इव जग्रसे.

एवं पृथ्वीराजं शत्रुसैनिकाक्रान्तं बन्दिनं निशम्यावशिष्टाः सर्वे क्षत्रिया यथाशक्ति युध्यमानाः समरान्न्यवर्तन्त. स च तार्तरखानो महताऽनन्देन तं बन्दीकृतं संध्यासमयसूर्यमिव हीनतेजस्कं पृथ्वीराजं स्वस्वामिनः शहाबुद्दीनस्य पुरतः स्थापयामास. शहाबुद्दीनस्तु आत्मनो जन्म सार्थकं मन्यमानस्तं सामन्तं परं प्रशशंस. पृथ्वीराजस्तु सरलहृदयस्तं शहाबुद्दीनमाह. यवनपते ! अद्य खल्वहं दुर्दैवतो हीनशक्तिस्त्वदीयसामन्तेन धृत्वा बन्दीकृतः. त्वमपि मदीयैः सामन्तैरेवमेव सप्तकृत्वो बन्दीकृतो मयैव मोचितः. तत्त्व-

मपि मां मुंच. अहं च पुनरपि स्वबलं वर्धयित्वा त्वया सह योत्स्ये. यदि त्वं मत्तः किंचिदपेक्षसे वित्तं तदा तदपि तुभ्यं प्रभूतं दास्यामि. इमौ तु जयपराजयौ केवलं दैवस्य देवस्य वा लीलाविलासौ. यदा तदनुकूलं भवति तदा हीनबलोऽपि विजयते. यदा प्रतिकूलं तदा स पराजीयते. तत्सदैव परतंत्रेण मानवेन यथाशक्ति धर्मेणैव वर्तनीयं. एष च धर्मो वीराणां यच्छरणागतस्य मोचनं. उपकृतवतश्च तादृशोपकारविधानेन स्वस्यानृण्यविधानं. तद्यथाहं त्वयि धर्मशीलोऽभवम् तथा त्वं मयि भवितुमर्हसि. इति.

अस्मादेव पृथ्वीराजस्य भाषणे स मूर्तिमानधर्मः शहाबुद्दीन आह राजन्? वयं च राजनीतिचतुराः. राजनीतिश्च तत्वज्ञानादत्यन्तं भिन्ना. पश्य—यदा हि कश्चन चौरः परस्य गृहं प्रविश्य तद्धनमपहरति तदा सर्वेऽपि तं निंदन्ति. राजाऽपि तदाचरणं निन्द्यं मन्यमानस्तं दण्डयति. परन्तु यदा कश्चन राजा सकलां स्वसेनामादायान्यं देशमाक्रामति. तत्स्थांज्जनान् लुण्ठति तत्स्थाः प्रजा दासीकरोति तदा तं राजानं न कोऽपि चौरत्वेन व्यपदिशति. नापि तं कोऽपि दण्डयति. प्रत्युत पराक्रमित्वेन व्यपदिशन्तः स्तुवन्ति. यथा हि तत्वज्ञाने तथा न व्यवहारे वर्तनं श्रेयस्करं कस्याऽपि! यूयं हि युद्धेऽपि धर्माचरणमावश्यकं मन्यमाना अस्माभिः पराजिताः. यदा हि अहं पराजितोऽभवम् तदानीमेव यदि त्वं राजनीतिमनुसृत्यावर्तिष्यथास्तदा नैवं प्रसंगमलप्स्यथाः. युष्माकं धर्मस्तदनुसारिणो यूयमपि मूढा एव. यथा च त्वं मां मुक्त्वाऽधुना शोचसि न तथाहं शोचिष्यामि. युद्धं स्यान्नाम युष्माकं धर्मो नास्माकं. वयं तु वणिज इव हिताहित-

विचारकुशला अन्यदेशाक्रमणार्थमेव योत्स्यामहे. तदधुना त्वां निर्नेत्रं विधाय मदीयं देशं नेष्यामि. इत्युक्त्वा च स कृतघ्नो यवनस्तस्य महानुभावस्य पृथ्वीराजस्याक्षिणी विदारयामास.

वाचकाः? पश्यत खलु दैवस्य लीलां. यो हि पृथ्वीराजः सम्राट् परमविख्यातं दिल्लीश्वरसिंहासनमशोभयत् सोऽयमधुना शत्रु-विदारितनयनो दीनवत् पटगृहे भूमितले निपपात. यो हि शहाबुद्दीनः सप्तकृत्वोऽनेन पराजितः स तु धर्माचरणं तिरस्कृत्वोपकर्तुरेव नेत्रे विदारयामास. महाभागाः? एवं सर्वं राज्यादिकं क्षणिकमिति प्रत्यक्षं पश्यन्नपि जीवोऽधर्ममाचरत्येव. अद्य तु पृथ्वीराजोऽपि नास्ति स शहाबुद्दीनोऽपि नास्ति. नापि तावस्माभिः प्रत्यक्षं दृष्टौ? केवलं वयं तैस्तैः प्रामाणिकैरितिहासकारैर्लिखितान् वृत्तान्तानेव पठामः, परन्तु तान् पठित्वा निःपक्षपातिनो वयं किं वदामः—इदमेव! यत्-कृतघ्नः शहाबुद्दीनः, उदारः खलु पृथ्वीराज इति. इदमेव पार्वण-चन्द्रमरीचिधवलं, सकलजनमुखसंचारि यावच्चन्द्रदिवाकरस्थायि, यशो लब्धं पृथ्वीराजेन. परिवर्तिनि जननमरणमये अस्मिन् संसारे यत् खलु सारं तदेतदेव. तन्मन्ये यो हि शहाबुद्दीनो गर्वेण यदीयं धर्मा-चरणं निनिन्द तेनैव धर्माचरणेन शाश्वतं यशो लेभे पृथ्वीराजः. तस्मात्पृथ्वीराजेनैव कृत्स्नं लब्धमिति सत्यमेव. एतेन व्यवहारे राजनीतिचातुर्यं प्रकटयन्तस्तत्त्वज्ञानेन नास्ति प्रयोजनमिति वदन्तो मानवापसदा निरस्ताः. तस्माद्येन केनापि मानवेन यस्यां कस्यामप्य-वस्थायां धर्माचरणं न हेयमित्येव सिद्धं. यो हि सम्यगितिहासं पठेत् स एव जानीयादिदं सत्यं नवेति. आस्तामधुना किं गतशोचनेन.

प्रकृतमनुसरामः. राजा जयचन्दोऽपि सत्वरं स्वजामातुः साहाय्यार्थमागच्छन् मार्गे सर्वं वृत्तमश्रृणोत्. स च प्रथमतः शहाबुद्दीनेन सदाविजयी पृथ्वीराजः पराजित इति न श्रद्दधेस्म, परन्तु समरभूमेर्निवृत्तैः पृथ्वीराजसेवकैरेव निवेदितकृत्स्नवृत्तः स्वकन्यायास्तथाऽन्यासां पृथ्वीराजस्य पत्नीनां क्षत्रियस्त्रीणां दुर्दशा माभूदिति सत्वरं दिल्लीनगरमभिलक्ष्य प्रचचाल.

तत्र तु स्वस्वामिनः पराजयं तथा बन्दिवासं निशम्य शोकाकुलाः सकला अपि पृथ्वीराजपत्न्यः समदुःखाभिरन्यक्षत्रियांगनाभिः समं वन्हिप्रवेशं कर्तुं कामयमानाः सर्वं व्यवस्थापयामासुः. संयोगिता च स्वपतेर्बन्दिवासं निशम्य वज्रेणेव मूर्ध्नि निहता विगतचैतन्येव भ्रमपरा न किंचिदप्यचेष्टत.

अत्रान्तरे राजकीयप्रासादे लाक्षाकर्पूरादीनां प्रज्वालकानां वस्तूनां राशीन्निक्षिप्य सर्वेऽपि अत्राशिष्टा जना लुण्ठनेच्छया समागच्छतो यवनान् रोध्दुमग्रेसरा अभवन्. संयोगिता तु दासीभिर्बोधितकर्तव्या सर्वासां स्त्रीणामग्रेसरा नाम भूत्वाऽवदत्. क्षत्रियकन्यकाः? अस्माकं रक्षकाः सर्वेपि क्षत्रियाः स्वकर्तव्यपालनपराः समरभूमौ त्यक्तदेहाः स्वर्गे युष्मान्प्रतिपालयन्ति. यथा हि तैः स्वकर्तव्यं कृतं तथा वयमपि स्वकर्तव्यं कुर्मः. नारीणां हि परमं व्रतं पातिव्रत्यं. पतिरेव देवता नान्या देवता स्त्रीणामिति सर्वाणि शास्त्राणि वदन्ति. तद्यदि सा देवताऽस्मान्विहाय परलोकं गता तदा किमर्थमस्माभिरत्रावस्थातव्यं? किंच– यथा हि क्षत्रिया अपरान् क्षत्रियान् वाऽन्यान्

वा विजित्य न तद्दारानाभिमृशन्ति न तथेमे मानवपशवो यवनाः. इमे हि गोमांसभक्षका अस्मान् दासीकृत्य भुज्या करिष्यन्ति. तत् क्षत्रियांगना यवनानां भुज्यात्वं स्वीकृत्य जीवन्तीति प्रवादमपहर्तुं त्रैलोक्यपालकं पवित्रस्याऽस्मद्विवाहस्य साक्षिणं वैश्वानरमेवाऽस्मत्पातिव्रत्यरक्षणार्थमाश्रयामहे. अयं चाश्रयार्थं समागता नो न दूषयिष्यतीति.

तदानीमेव राजा जयचन्दः स्वसैनिकसमवेतो महता जवेन तत्राजगाम. तं च वीक्ष्य साध्वी संयोगिता नेत्रकमलनिपतदश्रुक्लिन्नमुखकमला सकलसौभाग्यालंकारमण्डिता सत्वरमग्रे गत्वा पितुः पादकमले अभिननाम. बभाषे च. तातचरणाः? अहमस्म्यभाग्या संयोगिता. जातमात्राया मम माता दिवमगच्छत्. ततश्च मातृस्थानापन्नैर्भवद्भिरेवाहं वर्धिता पालिता शिक्षिता च. अथ यौवनं प्राप्ता युष्माकं शत्रुभूतेषु दिल्लीश्वरेषु बध्दानुरागा युष्मानक्लेशयम्. निभृतं च गान्धर्वविवाहेन विवाह्य नाथेन समं दिल्लीनगरमागन्तुं प्रायते. तत्रापि बहवो वीराः पंचत्वमगमन्. अंते च तस्मिन्नपि वैरानले शांते विलासमग्नान् नाथान्विधाय राज्यरक्षणे सालसानकरवम्. ततोऽपि मान्यं हाहुलीरायं तथा विद्वांसं चंदकविं च दासीभिरताडयम्. ततएवेयमापत्तिः प्राप्ता. मया तु केवलं यूयमेव न पीडिता किंतु पतिचरणा अपि दुःखसागरे निक्षिप्ताः. तत्सर्वानपि युष्मान् क्षमायाचनपुरःसरमापृच्छामि. अहमस्मि वीरपत्नी वीरकन्या. तत्पवित्रयोर्ममोभयकुलयोर्योग्यमेवाचरिष्यामि इति. उक्त्वा चेत्थं स्वयं हस्तेन तस्मिन् स्फोटकद्रव्यराशौ वन्हिं निक्षिप्य स्वयं तत्र प्रविवेश.

अचिरादेव स भगवान् वैश्वानरस्ताः सर्वाअपि क्षत्रियकन्यका आत्म-
सात्कृत्वा दुष्टेभ्यो यवनेभ्यो ररक्ष.

राजा जयचन्दः कन्यायास्तथा जामातुः पृथ्वीराजस्य स्थिति-
मवलोक्य दुःखसागरमग्नोऽपि स्वराजधानीं पालयितुं ययौ.

शहाबुध्दीनस्तु पृथ्वीराजं विजित्य द्वितीयं क्षत्रियराजं
कनोजाधिपं जेतुं तमेव तातरखाननामानं सामन्तं प्रायुंक्त. सोऽपि
च महत्या त्वरया तं जयचन्दमनुधावन्नचिरादेव तं कनोजाधिपं मार्ग
एव जग्राह. जयचन्दस्तु जामातुर्दुरवस्थां वीक्ष्य खिन्नः कन्यावियो-
गानलदग्धः कथं कथमपि प्रायुध्यत. परन्तु तादृशोत्साहाभावात्सद्य
एव पराजितः

इत्थं सर्वत एव समागच्छन्तीनामापदां परंपरामवेक्ष्य दैवं प्र-
तिकूलं मन्वानो जयचन्द आत्मानं गंगाजलेऽपातयत्.

तस्मिन्नेव क्षणे सकलजनपावनी सा गंगा तं स्वोदराभ्यन्तर्व-
र्तिनमकरोत्. एवं न केवलं दिल्लीनगरवासिनोऽनाथा अभवन्किन्तु
कनोजनगरवासिनोऽपि.

वाचकाः! ये खलु जगदिदं सत्यं मन्यन्ते तैरिदमुदाहरणं
सम्यग्विचारणीयम्. स्वप्ने च जागृतौ च न कोऽपि भेद इति सर्वे
-पि विचारशीला वदन्त्येव. जागृतिर्नाम महास्वप्नः. अस्तु. एवं च
निहतक्षत्रियराजेयं भारतभूर्हतपुत्रा विधवेव शोचनीयाऽभवत्.

इत्थं शहाबुद्दीनः स यवनराजस्तौ महापराक्रमशालिनौ पृथ्वीराज-कनोजाधिपौ निर्जित्य हर्षाकुलः स्वसेनासन्तोषार्थं दिल्लीप्रभृतीनि राजधानीनगराणि लुण्ठितुमादिदेश. ते च यवनसैनिकाः—स्वस्वामिन इमामाज्ञां निशम्य सानन्दा बुभुक्षिता वृका इव सुसंपन्नां, धनाढ्यवैश्यकुलसमाश्रितागणितद्रव्यराशिं, दिल्लीनगरीं प्रविश्य सर्वानपि दीनाननाथान्नगरवासिनो जनानासिलताबलीन्विदधतः सर्वत्र प्रलयमकुर्वन्. दयालेशविरहितास्ते ऽगणितान् मानवान् हत्वाऽवशिष्टान् सर्वान् हन्तुमशक्नुवन्तो दासांश्चक्रुः तत्रापि याः कुलीनास्तरुण्य आसंस्तास्तु बलात्कारेण पातिव्रत्यशीलाद्भ्रंशयन्तः स्वभुज्या अकुर्वन्. बहवश्च स्वकुलाभिमानिनो जनाः स्ववधूनां शीलहरणभिया प्रथमतस्ताभ्यो विषं वितीर्य स्वयमपि विषमयांश्चषकानगृण्हन्. तेन च ते बहुषु स्थलेषु प्रेतानेवापश्यन्. क्वचिच्च मानिजनैः प्रवर्तितयुद्धान् महाप्रसादानवलोक्य क्रोधान्धा वन्हिना तान् प्रसादान् प्रज्वालयामासुः. तेन च तेऽन्तरेव पुटपाकदशां प्राप्य जीवितं व्यसृजन्. क्वचिच्च निहतं कान्तमवलोक्य शोचन्तीं तरुणीं क्षात्रियकन्यकां बलात्कारेण दासीकर्तुं प्रयतमानास्ते यवनाः परस्परमेव हत्वा सर्वे यमालयं जग्मुः. क्वचिदर्धदग्धशरीराः, लावण्यपुत्तलिका इव क्षात्रियकन्यकाः शीलभ्रंशभिया वन्हिं प्रविष्टा अवलोक्य सुतरां व्यस्मयन्त. क्वचिच्च नगरत्यागसमये स्वयं नेतुमशक्तैः प्रजाजनैरितस्ततः क्षिप्तान् सुवर्णालंकारानेव प्रेक्ष्य लोभाकुला भिक्षव इव तानगृण्हन्. वाचकाः! या खलु दिल्लीनगरी दिनद्वयात्पूर्वं हीरकपरिपूर्णापणस्थितवणिक्, सकलधान्यपरिपूर्णविपणीका, राजसेवकरक्षितसकलभागा, अनेकदेशागतव्यवहारिजनसंकुला, सालंकृता

सनाथा वधूरिवाभात्, साऽधुना अनेकप्रेतराशिसमाच्छादितराज-रथ्याका, प्रज्वलत्प्रासादततिका, रोदनप्रचुरकल्लोला, रक्तस्रावसिक्त-सकलहर्म्या, निर्मनुष्यराजवीथ्याका, सशस्त्रशत्रुजनसंकुला, भस्माव-शिष्टराजपत्नीसमूहा, अन्येव दीनबालेव, शौनककीता धेनुरिव, अराजका यमपुरीव, भयंकरनिवासाऽभूत्.

एवमेव ते यवनाः सुव्यवस्थितरचनं, अनेकबकुलपाटलीचंपकपा-रिजातादिवृक्षमण्डितारामसहस्रालंकृतं, विविधचित्रमण्डितागणितनौ-काविराजमानभागीरथीभूषितं, सुगंधितैलामोदप्रचुरं, कस्तूरिकापरि-मलान्धभ्रमरगुंजारववाचालितं, उशीरादिसुगंधिद्रव्यमयापणं, सुवर्णा-लंकारालंकृतसकलशूद्रादिजनं, हीरकादिरत्नजातप्रभाभासुरं, कनोजा-दिकं नगरजातं विलुण्ठय यमनगरीसादृश्यं प्रापयन्.

एवमस्यां सकलसुखसम्पन्नायां भूमिगतस्वर्गायमाणायां भार-तभुवि दैत्या इव घोराणि वर्तनानि विधायागणितां सम्पदं गृहीत्वा विजयीभूय स शहाबुद्दीनस्तं दुर्दैवव्याप्तं प्रज्ञानेत्रीकृतं क्षत्रियकेसरिणं पृथ्वीराजं बन्दिनं गृहीत्वा महताऽनन्देन स्वदेशं ययौ.

तत्र च स्वनगरे तं भारतवर्षसम्राजं सर्वेभ्यः स्वप्रजाजनेभ्यः प्रदर्श्य तस्य पादयोरतिकठिना दृढा आयसीलोहशृंखला निधाय सूर्यकिरणैरस्पृष्टे, जलसंबंधाक्लिन्नभूमिके, अतिविशालकुड्यपरिवृते, नग्नखड्गधारिभिर्विश्वासपात्रैर्निरीक्षकैः परिपालिते कारागृहे लज्जारक्षण-पर्याप्तं वस्त्रं वितीर्य तं पृथ्वीपतिं पृथ्वीराजं न्यधात्.

पृथ्वीराजोऽपि धैर्यखनिरात्मनो दैवं प्रतीपं मन्यमानः सर्वमप्य-पमानजातं महता सन्तोषेणासहत. सर्वेऽपि परकीया अपि सज्जनाः सार्वभौमस्य तस्य पृथ्वीराजस्येदृशीं दुर्दशामवलोक्य सुतरामदूयन्त. परन्तु शहाबुद्दीनस्य क्रौर्यं जानन्तस्तूष्णीमतिष्ठन्. समये समये चातिखिन्नः स्मृत्वा कृत्स्नं पूर्ववैभवं समुत्पन्नवैराग्य आत्मानमपि हन्तुमैच्छत् परन्तु सकलकर्तव्याकर्तव्यसाक्षिणी सदसद्विवेकबुद्धिरेव तादृशात् घोरात् पापात्तं न्यवर्तयत्.

( ९ )

एवं गतसकलैश्वर्ये क्षत्रियकुलमुकुटमणौ पृथ्वीराजे दीनवद्गि-झनीनगरे बन्दिशालायां निवसति सति तत आगतैर्व्यवहारार्थंगतैर्व-णिग्भिर्निबोधितसकलराजवृत्तान्तः कविराजश्चन्दः सुतरां दुःखाय-तेस्म. यदा च पृथ्वीराजः समं चामुण्डरायप्रभृतिभिः सामन्तैः शहाबुद्दीनेन समं योध्दुमगात्तदाऽयं चन्दकविर्भगवतीभवनं प्रविश्य तत्र भविष्यज्ज्ञानार्थं तपोऽतप्यत.

तदानीं च भगवती स्वयमाविर्भूय सर्वमपि भाविवृत्तं कथयामास. तेन च दुःखाकुलः स चन्दकविः प्रथमतः कृत्स्नमपि पृथ्वीराज-चरितं रसमय्या वाण्याऽलिखत्. स च ग्रंथो यद्यपि प्राकृतभाषायां लिखितोऽस्ति तथापि गीर्वाणवाणीग्रंथानप्यतिक्रामति. अस्तु.

एवं पुण्यश्लोकस्य तस्य दिल्लीश्वरस्य चरितं लिखित्वा समा-प्तकृत्यः सर्वत्र प्रचरन् दिल्लीनगरस्य तथा तन्नागरिकाणां च दुरवस्था-मवलोक्य खिन्नो मनस्यकरोत्—अहो कालमहिमा ; यो हि केवलं

खनाम्नैव शत्रूनकम्पयत्. यस्य नाम श्रुत्वैव सर्वे रिपवः कांदिशीका अभवन्, स च सम्राट् पृथ्वीराजोऽधुना क्षुद्रस्याधर्मशीलस्य सप्तकृत्वः पराजितस्य गिझनीपतेः शहाबुद्धीनस्य बन्दी नाम भूत्वा कारागारमधिवसति. एतेनेदं सुनिश्चितं यत् कालप्रभावादेव हि सर्वे विजयन्ते पराजयन्ते च. एष एव शहाबुद्दीनः सप्तकृत्वः पराजितोऽपि पुनरपि दिल्लीश्वरं विजेतुं प्रयतमानो विजयी बभूवैव. तत्सर्वदा मानवेनोद्यमः करणीय एव. फलदाने च दैवमेव कारणं. साम्प्रतं तु अहमेकाकी न शहाबुद्दीनं जित्वा स्वामिनं मोचयितुं प्रभवामि. अधुना तु दिल्लीश्वरं मोचयित्वा पुनरपि सिंहासने तस्य स्थापना खपुष्पायते. अयं चावतारसमाप्तिकाल एवेति निश्चितं. भगवतीवचनानुरूपमस्मिन् भारतवर्षे क्षत्रियशासनं विनाश्य यवनशासनमेव भवेदित्यत्र न संशयः. ममापि नास्त्यधुना जीवनस्यावश्यकता. तथापि यावत्पर्यन्तं मम स्वामी पृथ्वीराजः कारागारवासदुःखमनुभवति तावत्पर्यन्तं मदीयाः प्राणा नोत्क्रामिष्यन्ति. तस्मादधुना गिझनीश्वरदर्शनाय मया गिझनीनगरं प्रति गन्तव्यं. तत्र गत्वा यदुचितं तदेव कर्तव्यम्. कुटिलमतिर्गिझनीश्वरो मां हि पृथ्वीराजस्य परमं मित्रं जानन् कदाचिन्मामपि कारागृहे वासयेत्? तदितो निर्गतेन मया पुनरपि दिल्लीनगरदर्शनाकांक्षा न करणीया. यत्खल्वत्र कर्तव्यं तत्कृत्वैव गिझनीनगरं प्रति गन्तव्यमिति.

एवं विचार्य कृतनिश्चयः स चन्दकविः प्रथमं स्वोपास्यदेवतां भगवतीं संपूज्य दिव्यैस्तोत्रैस्तुष्टाव. सा तु प्रसन्ना स्वयमाविर्भूय चन्दकविमवदत्. वत्स चन्दकवे! तुष्टास्मि. गच्छ गिझनीनगरं.

त्वदभीष्टं सर्वमपि परिपूर्णं भविष्यतीति. भगवतीभक्तश्चन्द-कविर्भगवत्या इदं भाषणं निशम्य सन्तुष्टः परमादरेणावोचत्—मातः ! अत उर्ध्वमस्मिन् भारतवर्षे म्लेंच्छस्य शासनं भविष्यति. तत्त्वमपि अन्तर्हिता भव. एष चन्दकविश्च स्वामिचरणैः समं स्वर्गमागतस्त्वां पुनरप्यर्चयिष्यतीति वदन्नश्रुसिक्तपादकमलं प्रणिपत्य भगवतीमन्दिरस्य कपाटे पिधाय बहिराययौ. बहिरागत्य गिझनी-नगरं जिगमिषुः प्रथमतः संयोगिताप्रासादमाजगाम तदभिवादनार्थं चन्दकविः. आगत्य च तत्र भस्मावशेषां संयोगितां समीक्ष्य दुःखाकुलो भूमौ निपत्य परमरोदीत्. विललाप च -राज्ञि ! संयोगिते ! यद्यप्यहं त्वया दासीभिस्ताडितस्तथापि नाहं क्रुद्धः किंतु भगवति ! त्वां भूतलवासिनीं देवतां मन्वानः सदैव नमस्करोमि. राजकन्ये ! संयोगिते ! विरोधिनं पितरमप्यगणयित्वा त्वया खलु भारतललामभूतः पृथ्वीराजो वृतः. तत्र च बहवः क्लेशा अजायन्त. परन्तु धैर्यखनिस्त्वं तानसहथाः. ईदृशैः प्रयासैर्लब्धेन भूपतिना समं न चिरं विलाससुखान्यन्वभूः. परमात्मना चाकाल एव त्वं स्वर्गलोकं नीता. देवि संयोगिते ! त्वया तु प्रज्वालेऽग्नौ निक्षिप्य स्वशरीरं योगिनामपि दुर्लभो मोक्षः संपादितः परन्तु परममान्येन दिल्लीश्वरेण विना कथमेकाकिनी स्वर्गेऽपि स्थातुं शक्नुयाः ! अयं चाद्यापि असमाप्तदैवभोगस्त्वदीयसंगतिलाभार्थमेवात्महत्यामकुर्वाण इहैव नारकीर्यातना अनुभवति. ताभ्यस्तं मोचयितुमहं प्रयते. तन्मातः संयोगिते! असह्यमपि स्वपतिवियोगं किंचित्कालपर्यन्तं सहस्व! मदीये आरंभे त्वं यशोदायिनी भवेति. विलप्य चैवं मूर्ध्नि निहिततत्स्थ-

भस्मा स चन्दकविर्महता जवेन कृत्स्नां दिल्लीनगरावस्थां विलोक्य संजातरोषस्तं गिझनीश्वरं शासितु कृतप्रतिज्ञो गिझनीं गन्तुं प्रचचाल. मार्गे च स आत्मानं यवनमेव ख्यापयन् परिवर्तितवेषः सर्वत्रादरातिशयमनुभवन् कतिपयैर्दिवसैर्गिझनीनगरमाजगाम.

गिझनीश्वरः शहाबुद्दीनोऽपि तस्य सर्वतोमुखीं पुष्पस्य गन्धमिव प्रथममेव समागतां कीर्तिं निशम्य तद्दर्शने संजातकुतूहलस्तं सादरं राजसभामाह्वयामास. चन्दकविश्च तावतैव सन्तुष्टस्तां राजसभां गत्वा स्वविद्यया तं परमतोषयत्. सर्वेऽपि तत्रत्या विद्वांसस्तं चन्दकविं परमस्तुवन्. राजा शहाबुद्दीनोऽपि तेन सहैकान्ते बहु समलपत्.

[ ६ ]

एकदाऽतिविस्तीर्णप्रवाहाया नद्यास्तीरे महति प्रासादे सुखेनोपविष्टं विविधदेशवासिजनशौर्यमुद्दिश्य प्रलपन्तं तं यवनाधिपमुवाच चन्दकविः—यवनराज ! युष्मदीया अत्रत्या जनाः शूरा एव तत्र न कस्यापि संशयः. परन्तु ते खड्गप्रहार एव कुशला न तु बाणैर्लक्ष्यवेधने. तत्र तु क्षत्रिया एव कुशलाः. द्रोणाचार्यप्रभृतयो भारतवर्तिनः सर्वेऽपि बाणैर्लक्ष्यभेदने परं विख्याता आसन्निति महाभारतादिग्रन्थेभ्य एव ज्ञायते. इदानीमपि सन्ति सहस्रशः शब्दवेधिनः. ये खलु पिधायापि स्वनेत्रे केवलं शब्दं श्रुत्वा लक्ष्यभेदं कुर्वन्ति. अहं तु मन्ये एतदलौकिकं बुद्धिकौशलमिति.

यवनाधिपतिश्च तस्य भाषणं निशम्य समुत्पन्नकुतूहलस्तादृशं वीरपुरुषमानीय तस्य हस्तलाघवं द्रष्टुमुत्को बभूव. चन्दकविश्च पुनरपि जगाद-राजन्! नास्ति तादृशवीरपुरुषस्य सौलभ्यं. परंतु किमर्थं दूरान्वेषणा! मया तु श्रुतं ' बन्दीकृतः पृथ्वीराजोऽत्र निवसति ' इति. स चाद्वितीयो धनुर्धर इति समस्तभारतवर्षे विख्यातं, तत् स एवाह्वनीयः. स चार्जुन इवादृष्टचरं वेधकौशलं दर्शयिष्यतीति. अथ शहाबुद्दीनं तु पृथ्वीराजनामश्रवणमलिनकान्ति चिन्तातुरमवेक्ष्य चन्दकविः सत्वरमवदत्-यवनाधिप! स आहूत आगच्छेन्नवेति न शंकनीयम्. क्षत्रियाणामेष नियमो यत्ते समाहूताः शरक्षेपार्थं कदापि न निवर्तन्ते. किंच-स एतावान् बली यदेकेनैव बाणेन दशातिस्थूलानि लोहपात्राणि भिनत्ति. यदि भवान् स आहूतोऽपि नागच्छेदिति मन्यते तदाऽहं तमत्रागन्तुं विज्ञापयिष्यामि. अस्ति तु मम वाक्सामर्थ्यमिति.

शहाबुद्दीनस्तु तत् सर्वमंगीकृत्य तथाकर्तुं तं चन्दकविमन्वमोदत. चन्दकविस्तु तावतैव सन्तुष्टस्तस्य कारागारवासिनःपृथ्वीराजस्य दर्शनार्थं ययौ.

अचिरादेव दृढायसयष्टिपिहितवातायने, प्रस्तरमयभूतले अतिविरलप्रकाशे, निर्मनुष्ये, शस्त्रिकगणरक्षिते, भोजनमृण्मयभाण्डमण्डिते, मलमूत्रविसर्जनार्थं स्थापितापरलोहभाण्डे, यमागार इव कारागृहे निवसन्तं, अतिकृशगात्रयष्टिं, असंस्कृतकेशपाशप्रवृद्धयूकासहस्रसाबाधं, अतिप्रवृद्धरोमभीषणं, नाशितदृष्टितया कुड्याघातविषम-

विशालभालफलकं, पादनिहितशृंखलासंबंधिशृंखलान्तरव्याप्तकण्ठं, अतिमलिनोर्णामयवस्त्रयुगलं वसानं, अतिगंभीराकृतिं सुप्तं सिंहमिव महाराजं पृथ्वीराजमपश्यत्

चन्दकविश्च तादृशीं तस्य सार्वभौमस्य स्वामिनो दुरवस्थामवलोक्य सततनिपतदश्रुधाराक्रान्तलोचनो दूरीभूत एव निरीक्षकाध्यक्षे सति तत्पादकमले स्वहस्ताभ्यां धृत्वा प्रणिपपात. जगाद च सगद्गदं—नृपराज ! पृथ्वीपते ! अहमस्मि नीचो भवतो दासश्चन्दकविः. वयं च परमपापिनो यदस्मासु जीवत्सु स्वामीदृशं दुःखमनुभवति. नाथ ! क्व चायं ते बन्दिवासः, क्व च दिल्लीश्वरसिंहासनं. स्वामिन् ! किमपराध्दमस्माभिर्यदित्थमस्मदुपरि परमात्मा कुपितः! क्षत्रियकुलमुकुटमणे? त्वयैव खलु सप्तकृत्वोऽयं यवनराजो जितो मुक्तश्च, परन्तु दुर्दैवतः प्राप्तपराजयं त्वामयमेव कृतघ्नः पापी शहाबुद्दीनः कथं वर्तयति. अयं च प्रमत्तो गिझनीपतिरवश्यमेवास्य दुराचरणस्य फलं भोक्ष्यत एवेति.

पृथ्वीराजश्च तं प्रत्यभिज्ञाय महतौत्सुक्येन प्रसारितभुजयुगलः परमानन्देनाश्लिषत्—उवाच च कविश्रेष्ठ ! नात्र शोकस्यावसरः. मानवो हि परमात्मना प्रचालितस्य संसारघटीयंत्रस्य भाण्डायित उन्नतिं लब्ध्वा मोदतेऽधोगतिं प्राप्य शोचति, वस्तुतस्त्वयं परतंत्र एव. अहं चास्मिन् म्लेंछदेशे स्थित्वा निर्विण्णोऽस्मि. नात्र कोऽपि मामकीनः. ईश्वरेच्छया मम सुखसाधने नेत्रे अप्यपहृते. तेनैव करुणात्मनाऽधुना त्वं प्रेषितः. तत्कथय किमर्थमत्रागतो भवान्. किमाश्रयाभावाद्गिझनीपतिं सेवितुमिति.

पृथ्वीराजस्येदं साकूतं भाषणं निशम्य क्रुद्धश्चन्दकविः सत्वरमाह-राजन्! यद्यप्यस्मि अहं निराश्रयस्तथापि परमात्मानं विहाय नान्यं सेवितुमिच्छामि, नहि मानसरोविहारी हंसः पल्वलं प्राप्य जीवति मोदते वा! अहं तु अत्रागतः स्वामिनो दुरवस्थां दूरीकरणाय. तदिदं क्लेशदूरीकरणं न तस्य यवनराजस्य कृपां संपाद्य किंतु वैरनिर्यातनेन. तच्चेत्थं-राजा शहाबुद्दीनो बाणेन लक्ष्यवेधं द्रष्टुमिच्छति. तत्र च पारंगतः स्वामी. श्वः खलु स्वामिनो हस्तलाघवं द्रष्टुं प्रासादवातायने सर्वैः सामन्तैः सममासनमुपविष्टः शहाबुद्दीन उच्चैः स्वामिनं प्रोत्साहयेत्. तदानीमेव शब्दवेधकुशलः स्वामी वैरं निर्यापयतु. आवामपि तदानीमेव स्वर्गं गमिष्याव इति. राजा च चन्दकवेरिदं भाषणं निशम्य विस्मितोऽवदत्-कविवर्य! यत्त्वयोक्तं तत्सर्वं योग्यमेव तथाप्यद्यावधि ये खलु युद्धप्रसंगाः कृतास्तेषु कोऽपि अनवधानो न हत इति न रोचते मह्यमेष वैरनिर्यातनमार्गः. कोहि जानाति कियत्कालमहं जीवामि. क्षणभंगुरेऽस्मिन् संसारे मानवेन सदाचरणमेव कार्यं. किं न स्मरसि मयैव राज्यमदांधमतिना कृतानि कयमाषवधादीनि कुकृत्यानि. तदिदमकृत्यं कर्तुं न मे शक्तिरस्तीति.

चन्दकविश्च तस्य मुनिवरस्येवेदं भाषणं निशम्य सन्तुष्टोऽपि पुनर्जगाद-राजन्! किमिदानीं त्वं संन्यासी संवृतः! त्वं हि न क्षत्रियः! स्ववैरनिर्यातनाय नाहमित्थं ब्रवीमि किंतु जगति पापप्रवृत्तिं रोद्धुं. त्वयि पराजिते सति पश्चाद्विजयमदमत्तैर्यवनैः कीदृशमाचरितं तन्न जानाति भवान्. इयं हिं शान्तिर्विप्रस्य शोभते नतु क्षत्रियस्य. अन्यथा

मृगयाकरणमपि पापमेव स्यात्. तस्माज्जगति अधर्मप्रतिबंधार्थं निर्मितया क्षत्रियजात्याऽवश्यमेव स्वकर्तव्यं करणीयमेव. किं त्वं नानुभवसि स्वयमेव शहाबुद्दीनस्य क्रौर्यं. इमे अक्षिणी एव तं निरतिशयं पापिनमधार्मिकं दर्शयतः. तदवश्यं स्वामिनेदमनुष्ठेयमेवेति.

पृथ्वीराजश्च क्लेशखिन्नः शारीरिकीं व्यथामसहमानस्तदीयं भाषणमंगीचकार. चन्दकविश्च तदाज्ञां गृहीत्वा स्वस्थानमाजगाम. परेद्युरतिविस्तीर्णं, अनेकराजपुरुषनिवारितजनसमूहं, अतिविशालस्य राजप्रासादस्यांगणं सर्वोऽपि जनसमूहस्तत्पृथ्वीराजस्यालौकिकं हस्तलाघवं दिदृक्षुः प्रचचाल. शहाबुद्दीनोऽपि स्नात्वा भुक्त्वा च विस्तीर्णायामट्टालिकयां परिस्थापिते नग्नासिलताभूषितकरैर्भीषणैः सेवकैः सुरक्षिते राजसिंहासने समं सामन्तचक्रवालेन शीघ्रमेवागत्योपाविशत्.

अथ भयंकरैः सादिभिः परिवेष्टितः, गोयुगवाह्ये शकटे स्थितो नेत्रविहीनो वन्यगजइवोत्पाटितदंष्ट्रः सिंह इव गदाविहीनो भीम इव सम्राट् पृथ्वीराजस्तत्स्थलमाजगाम. सर्वे च द्रष्टारो जनास्तं नरशार्दूलं प्रेक्ष्य विस्मिता विपत्तिदर्शनेनादुःखायन्त. समलपंश्च परस्परं ‘ नैष महाभागो राजेश्वर ईदृशीं विपदमर्हति ’ इति अस्तु.

पृथ्वीराजश्च राजाज्ञानुसारेण भूमाववतारितः स्वयोग्यं धनुरन्वेषयति स्म. बहुषु चापेषु ज्याबन्धनमप्राप्यैव त्रुटितेषु सत्सु

कोषाध्यक्षो राजानुमत्या तदीयमेव धनुस्तस्मै ददौ तच्च गृहीत्वा सन्तुष्टः स पृथ्वीराजः शृंखलाभारमसहमानः कथंकथमप्युत्थाय तस्थौ.

चन्दकविश्च तदानीं गिझनीपतिमाह—राजन्! एष पृथ्वीराजो यद्यपि तव शत्रुस्तथाप्यधुना केवलं तदीयं हस्तलाघवं द्रष्टुमसावत्रानीतः तदधुना शृंखलाबन्धनं किमर्थं! अनेन महता शृंखलाभारेणभुग्नग्रीवः स लक्ष्यवेधमपि न सम्यक् कर्तुं शक्नोतीति मन्ये. तदपनयनाय शृंखलाभारस्य स्वसेवकानाज्ञापयेति.

शहाबुद्दीनस्तु तदीयं बलं तथा भव्यामाकृतिं विलोक्य भीतः कपटमतिराह—कविश्रेष्ठ! अलं भीत्या. एष महाबलः पृथ्वीराजस्तावन्तमपि भारं वहंल्लीलया लक्ष्यं विध्यात्तदधुना लक्ष्यवेधार्थं तमाज्ञापयामीति. चन्दकविरपि कुटिलमिदं तस्य प्रत्युत्तरं निशम्य संतप्तोऽपि बहिः सन्तापमप्रदर्शयन् राजानमुवाच यवनराज! अयं पृथ्वीराजः कृशः संवृत्तस्तेन सम्यक् न श्रृणोति. तदहं तस्य समीपे तिष्ठामि. शहाबुद्दीनोऽपि तमनुमुमुदे.

अथ सज्जीकृतचापं तं पृथ्वीराजमवलोक्य शहाबुद्दीनः सोत्साहमाह. भो पृथ्वीराज! एष तव सेवकश्चन्दकविस्त्वमद्वितीयो धानुष्क इति त्वां स्तौति. अहं तु न विश्वसिमि. नैवं चेन्मदीयं कण्ठनालमालक्ष्य त्वया मुक्तः शरो विफलः कथमभूत्. तस्मात् सर्वेषां प्रेक्षकाणां पुरत एव पकटय हस्तलाघवं. इमे च लोहमयाः खण्डा इति. पृथ्वीराजस्तु रणधुरंधरो दैवविपरीतगतिस्तदीयमिदं

भाषणं निशम्य क्रुद्धः प्रथमतो ज्याध्वनिमकरोत्. तेन भयंकरेण ध्वनिनैव सर्वे प्रेक्षकाःसशस्त्रा निरीक्षकाश्च बिभ्युः. शहाबुद्दीनस्तु तं धनुषो भयंकरं ध्वनिं स्वप्राणानपहरतः कालस्याट्टहासध्वनिमेवामन्यत.

अथ पृथ्वीराजः क्षणादेव विपरिवर्तितमुखो ध्वनिश्रवणादनुमितराजस्थानस्तस्य दुरात्मनः स्वशत्रोः कण्ठदेशमभिलक्ष्यातितीक्ष्णं विषदिग्धमुखं बाणं व्यसृजत्. सर्वे च प्रेक्षका लोहपात्रनिहितनेत्रा अज्ञातपृथ्वीराजविपरिवर्तना आसन्. स च बाणो निमिषार्धादुच्चसिंहासनाधिवासिनः शहाबुद्दीनस्य कण्ठदेशं भित्वा दूरं ययौ. अपतच्च तस्मिन्नेव क्षणे स्वकर्मार्जितलोकं गतस्य तस्य यवनराजस्य शरीरं धरणीतले. अकस्मादेव तं सिंहासनात्परिपतन्तमवलोक्य मूढा जनाः केवलं तं मूर्च्छितमेवामन्यन्त. परिचारकरोदनध्वनिमाकर्ण्य विदितस्वराजदेहपाताः सर्वेऽपि ते यवना अत्यन्तमक्रुध्यन्. स्वासीन्निष्कोषीकृत्य तं पृथ्वीराजं तस्य साहाय्ययितारं चन्दकविं च हन्तुमधावन्. चन्दकविश्च सावधानस्तं निपतन्तं शहाबुद्दीनमवलोक्य कृतकृत्यं मन्वानः पृथ्वीराजस्य सन्निधिं गतस्तदीयकर्णे शनैरात्मोद्यमस्य साफल्यं बोधयित्वा तं समतोषयत्. त्वरितमेव तावुभावपि वैरनिर्यातनेन जन्मनः साफल्यं मन्वानौ नग्नाभ्यामसिभ्यां परस्परं प्रहृत्य देहावत्यजताम्. तस्मिन्नेव क्षणे स्वर्गादवतीर्णे विमाने कृतप्रवेशौ तौ मर्त्यलोकनिवासं विहाय परलोकमगच्छताम्. केचन यवनराजपक्षपातिनो जनास्तावनिन्दन्. केचन दाक्षिण्येन तावस्तुवन्. केचनार्याणां भारतवासिनां बाणक्षेपे हस्तलाघवमभ्यनन्दन्.

(७)

वाचकाः! महाभागाः! इदानीं समाप्तमेव पुण्यश्लोकस्य पृथ्वीराजस्य चरितम्. सम्प्रति तु अवसरप्राप्तं गुणदोषविवेचनं संक्षेपतः करोमि. तद्भवत्यावश्यकं. यतो यानीमानि आख्यायिकारूपेण वेतिहासरूपेण वा लिखितानि पुण्यमानवानां चरितानि सन्ति, तेषामुद्देशो लोकशिक्षैव. एवंरीत्या महतः क्लेशांल्लब्ध्वापि अन्ते सुखी बभूव स धार्मिको नृप इतीतिहासपठनेन नवीनानां मनसि विश्वासो जायते. स्खलितप्रदर्शनेन तानि नूतनो जनो यत्नेन परिहरति गुणांश्च गृण्हाति.

सज्जनाः! अस्मिञ्जगतीतले के वा न समुत्पन्नाः के वा न मृताः! इह भारतवर्षे बहवः खलु साधवः शूरा अलौकिकानि कर्माणि कृत्वा दिवं गता इति सत्यं, तथापि पृथ्वीराजचरितमन्यादृशमेवाभाति. तथाहि अस्मिन्नल्पीयसि चरिते सर्वा अवस्थाः प्रतिबिंबिताः. ता विलोक्य सर्वं खल्विदं मानवजीवितं दैवायत्तमिति मन्वानो मानवो न पापाचरणे प्रवर्तेत. स्वावस्थासु अखण्डात्मविचारणैव मानवस्य पापाचरणरोधिका. सा चास्मिन्चरिते प्राधान्येन दरीदृश्यते. कथं चैतत्तद्द्वयं पश्यामः--

अस्मच्चरित्रनायकः पृथ्वीराजः खलु अजमीरापरनामधेयस्य द्रोणगिरिराजस्य पुत्र इति मया पूर्वमेव कथितं. तच्च राज्यं नातिप्रबलमिति तत्त्यागादेव ज्ञायते. एवं च पृथ्वीराजो हि न कस्यचित् क्षुद्रस्य कुले लब्धजन्मेति यद्यपि सत्यं, तथापि स जन्मत

एव कस्यचित्सार्वभौमस्य पुत्र इत्यपि न. ततश्च जन्मतः स साधारण एवासीदिति निर्णीतम्. अथ यदा तदीयो मातामहो दिल्लीश्वरोऽनंगपालः स्वयमनपत्यस्तस्मै दौहित्राय दिल्लीराज्यं समर्पयामास तदा स सार्वभौमो बभूव. तावत्पर्यन्तं स महान्ति कार्याण्यकरोदित्यपि मया पूर्वं निवेदितमेव. अयं च कालः पृथ्वीराजस्योदयकालः. यथा हि प्रभाते सूर्य उदेति तथैव पृथ्वीराजः सोमेश्वराल्लब्धजन्मा क्रमेण वर्धमानो दिल्लीराज्यं प्राप.

अथ दिल्लीराज्यप्राप्तिप्रवर्धितैश्वर्यः पृथ्वीराजो यानि पराक्रमकृत्यानि चक्रे संयोगिताहरणविलासपर्यन्तानि सोऽयमस्य मध्यकालः. अस्मिन् समये चैश्वर्येण समं तस्य मदोऽपि ववृधे. स्वाभाविकमपीदं. रजोगुणप्रधाना हि क्षत्रियजातिः. अतएव स स्वमित्रमपि चामुण्डरायं तथा कयमाषामात्य स्वयमेवादण्डयत्. केवलं संयोगितासंपादनार्थं सहस्रशो मानवानघातयत्.

यदा हि शहाबुद्दीनेन समं युध्वा लब्धपराजयः पृथ्वीराजो नानाविधा आपत्तीरनुभाव्य वैरनिर्यातनं विधाय दिवं जगाम सोऽयं कालस्तस्य चरितस्य चरमकालः. चरमसमये स स्वस्थचित्तोऽपगतमदः स्वात्मनिष्ठोऽभूत्.

एवं चोपरिदर्शितरीत्या पृथ्वीराजचरिते सर्वा एवावस्था दृश्यन्ते. पृथ्वीराजे प्राधान्येन गुणः सरलता निष्कापट्यमासीत्. स चैतावानासीद्यद्भूयोभूयः प्रकटितशत्रुभावं गिझनीपतिं शहाबुद्दीनं जित्वाऽमुंचत्. न प्राणैर्व्ययोजयत्. अयं सरलतागुण एव दोषो-

ऽभूत. अस्तु. अपरो गुणो दीनदयालुता. इच्छिनीकुमार्याः कृपा-
याचकं पत्रं वीक्ष्य तस्मिन्नेव क्षणे स तस्याः साहाय्यमकरोत्.

तस्मिन् शौर्यमपि निरतिशयमासीत्. तदेतत्संयोगितानिवास-
भवनान्निर्गतेनैकाकिना तेन सर्वे निरीक्षका निहता इत्यादिभ्यः
कथाभ्यः स्फुटमेव. वाचकाः! प्रायः इदं जगतीतले दृश्यते यद्य
खलु शूरा विद्वांसो वा सन्ति न ते विलासिन इति परन्तु
पृथ्वीराजः खलु परं शूरोऽपि विलासी आसीत्. बह्व्यो राजकन्यका
स्तस्य विलासकौशलेन मोहितास्तमकामयन्त. तथैव स दानशूरोऽपि.

सज्जनाः! बहुधा जना स्वदोषमपन्हुवाना गुणानेव प्रदर्श-
यन्ति तेन सहसा दोषा लोकलोचनपथं नायान्ति. परन्तु लोकशि-
क्षणार्थं प्रयतमानेन प्रथमतो हानार्थं दोषाः कथनीयास्ततश्च गुणाः.
अत्र तु प्रथमतो मया श्रीपृथ्वीराजस्य गुणा एव निरूपितास्तत्र
कारणमादरातिशयः. तथाप्यधुना दोषा निरूपणीया एव.

पृथ्वीराजे प्राधान्येन दोषः—विषयासक्तिर्मृगया च. तत्र
तस्य विषयासक्त्या कियती हानिरभूदित्यत्र हाहुलीरायवृत्तान्त एव
प्रमाणं. राज्ञो हि विषयोपभोग आवश्यकः परन्तु नात्यन्तं. स एव
प्राधान्येन सेवितो राजधर्मं दूषयति. एवं मृगयाऽपि. पृथ्वीराजश्च
यदा दुर्वाससः शिष्येण चक्षुःश्रवसा शप्तस्तदा तेन द्वादशमासेभ्य
ऊर्ध्वं अयं शापस्ते फलदो भविष्यतीत्युक्तोऽपि न किमपि मनसि
वैराग्यं धृत्वा स्वकर्तव्यपालने तत्परोऽभूत् प्रत्युत संयोगितया समं
चिरं विललास.

द्वितीयो दोषोऽविचारिता. पृथ्वीराजश्च कुतश्चिदपि कारणात्संतप्तो नष्टसदसद्विवेकबुद्धिः सहसा नाना कुकर्माण्यकरोत्. अत्र च प्रमाणं-चामुण्डरायस्य शस्त्रत्यागः. चामुण्डरायस्तु महाबलः पृथ्वीराजस्य श्याल एवासीत्. तथापि कोपातिरेकेण स शस्त्रं त्याजित एव. कयमाषामात्यस्य तु कथा हृदयविदारणी निःसंशयमुपरि कथितं दोषमेव द्रढयति.

महाभागाः! पाठकाः! एवंरीत्या तस्यास्मच्चरित्रनायकस्य दोषा गुणाश्च कथिताः. सम्प्रति उपसंहरामि. यद्यप्येते स्युर्नाम तस्मिन् क्षत्रियमुकुटमणौ पृथ्वीराजे दोषाः. एकान्ततो हि दोषाभावः परमात्मन्येव नतु मानवे, तथापि पृथ्वीराजसमयेऽस्मत्पूर्वजाः सुतरां सुखिन आसन्नित्यत्र न संशयः. अधुना वयं गुणवत्यापि राजनि भारतवर्षं शासति सति दुःखयामहे. अस्य वैषमस्य कारणं देवो वा दैवं वा यत्स्यात्तत्प्रणम्य पुनरप्यस्मिन् भारतवर्षे भारतवासिजनेषु पृथ्वीराजस्य धैर्यं, चामुण्डरायस्य शौर्यं, कयमाषस्य दाक्षिण्यं सावधानता च, संयोगितायाः गुणानुरागित्वं, चन्दकवेः स्वामिभक्तिर्विद्वत्ताचेत्यादयः सर्वे गुणाः प्रकटीभवन्तु इति परमात्मानं याचित्वा विरमामि.

